UGC-CARE Listed (Arts and Humanities) Sr. No. 394 ISSN NO. 2457-0729

चतुर्थोऽङ्कः, 2022-23

# वाग्वै ब्रह्म

## सन्दर्भिता पुनर्वीक्षिता च वार्षिकी राष्ट्रियशोधपत्रिका

## Refereed & Peer Reviewed Annual National Research Journal

एकः शब्दो हि सम्यक् श्रवणमननतः शास्त्ररीत्या प्रयुक्तः
स्वर्गे लोके च कामं कलयति निखिलं सद्य एव प्रकामम् ।
सोऽयं स्फोटाभिधेयः श्रुतिशतमहितो मध्वरिः सद्ध्युपास्यो
धात्रंशो लाकृतिर्वै कलिमललुलितान्नश्च पायादपायात् ॥





व्याकरणविभागः

केन्द्रीयसंस्कृतविश्वविद्यालयः

(प्राक्तनं राष्ट्रियसंस्कृसंस्थानम्)

(संसदोऽधिनियमेन संस्थापितः,शिक्षामन्त्रालयभारतसर्वकाराधीनः)

क. जे. सोमैयापरिसरः

विद्याविहारः, मुम्बई - 400 077 (महाराष्ट्रम्)

| | |
|---|---|
| RNI No. | MAHSAN/2017/73496 |
| ISSN No. | 2457-0729 |
| पत्रिकानाम | वाग्वै ब्रह्म: |
| © | केन्द्रीयसंस्कृतविश्वविद्यालयः क. जे. सोमैयापरिसरः, मुम्बई, (महा.) - 77 |
| प्रकाशकः | केन्द्रीयसंस्कृतविश्वविद्यालयः<br>(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्)<br>क. जे. सोमैयापरिसरः, विद्याविहारः (पूर्वः), मुम्बई, महाराष्ट्रम् - 400 077 |
| अङ्कः | चतुर्थः, 2022-23 |
| अनुवृत्तयः | 200 |
| प्रकाशनसमयः | फरवरी, 2023 |
| मुद्रकः | वन्दना आर्टस्, मिनाक्षी अपार्टमेन्ट, शॉप नं. 3,<br>एल्. बी. एस्. मार्ग, विक्रोळी (प), मुम्बई - 400 079 |

**केन्द्रीयसंस्कृतविश्वविद्यालयः**
( संसदोऽधिनियमेन संस्थापितः )
( शिक्षामन्त्रालयभारतसर्वकाराधीनः )
**क.जे.सोमैयापरिसरः**
सुरुचिभवनम्,सोमैयाविद्याविहारः,
विद्याविहारः( पू. ),मुम्बई- ४०० ०७७ महाराष्ट्रम्



**Central Sanskrit University**
(Established by an Act of Parliament)
(Under Ministry of Education, Govt. of India)
**K.J.Somaiya Campus**
Suruchi Bhawan, Somaiya Vidyavihar,
Vidyavihar (E.), Mumbai – 400077 Maharashtra



## ॥ शुभानि सन्तु ॥

प्रेक्षाप्रकर्षस्य लक्षणं व्याकरणान्तरविलक्षणं वैदिकाऽवैदिकसंस्कृतशब्दानुशासनं संशुद्धिसाधु-त्वादोनां नियमव्यवस्थानं संस्कृतज्ञानामादरातिशयाधिष्ठानम् अनितरकृतप्रयत्नफलं पाणिनीयव्याकरणं प्रेक्षावतां जनुष्मतां कृते संस्कृतमविकलस्वरूपं नूनं निपुणं निर्दिशति ।

**'तदवगमननिष्ठः शब्दशास्त्रे पटिष्ठः'**

अपि च, **'यस्मात्खलु प्रथममेतदधीत्य धीमान्,**
**शास्त्रान्तरस्य भवति श्रवणेऽधिकारी ।'**

इति भास्कराचार्य्यवचनानुरोधेन प्राथम्येन अधीतव्याकरणेन शब्दशास्त्रे पटिष्ठेन शास्त्रान्तर-श्रवणेऽधिकारित्वमवाप्यते विदितमेवेदं विद्यावताम् ।

केन्द्रीयसंस्कृतविश्वविद्यालयस्य मुम्बईपरिसरीयेण व्याकरणविभागेन मेधामण्डितेनैषमोऽपि **'वाग्वै ब्रह्म'** इत्यभिधानेन शोधपत्रिकायाः चतुर्थाङ्कं निर्माय शाब्दिकानां शास्त्रान्तरव्यसनिनाञ्च तोषाय प्राकाश्यमानीयत इति महते मोदाय कल्पते ।

अहञ्च सारस्वतोत्सवेऽस्मिन् भागग्राहिणां विदुषां, गवेषकाणाम्, पुनर्वीक्षकाणां च मनीषिणां योगदानम्, सम्पादकमण्डलमण्डनानां व्याकरणविभागीयाचार्य्याणाञ्च कृतप्रयत्नमभिनन्दयन् संस्कृत-विद्यां सर्वत्र विद्योतयितुं भगवन्तमृद्धिसिद्धियुक्तं सिद्धिविनायकं प्रार्थये, कामये च समेषां संस्कृताराधनतत्पराणामनपायानि सन्ततं शुभानीति विज्ञपयामि ।

(प्रो. लक्ष्मीनिवासपाण्डेयः)

# विदाङ्कुर्वन्तु ............

तप:प्रसादितप्रज्ञया प्रणीतत्वात्, श्रुतिस्वरूपमाहेश्वरसूत्रकदम्बमूलकत्वात्, प्रमाणभूताचार्य्य-निर्मितत्वाद्दर्भपवित्रपाणिनाऽऽविष्कृतत्वात्, लौकिकवैदिकोभयविधशब्दानुशासनत्वात्, प्रतिपदं स्व-रान्वाख्यायकत्वाद्वेदवदनत्वात्, मुनित्रयसम्मतत्वाद्, व्याख्यानद्वारा मुनिद्वयेनापमृष्टत्रुटिकत्वादर्धमात्रा-पर्य्यन्तशब्दलाघवदृष्ट्या विनिर्मितत्वात्, नानालौकिकन्यायानामप्याश्रयणात्, निर्माणकौशलशालित्वाद्-वेदसाम्यत्वाच्च विजयतेतरां नितरां व्याकरणशास्त्रम्, प्रकाशतेतराञ्चेदमधिविद्यम् । यत्र निपुणाश्चा-लन्या सक्तुमिव मनसा प्रज्ञानेन वाचं पवित्रयन्त: सन्तस्तां विविक्तां कृत्वा सूक्ष्मतमशब्दे ब्रह्म-साम्यज्ञाना: सायुज्यं मोक्षं लभन्ते । स्थूला, सूक्ष्मा, सूक्ष्मतमेति तिसृषु वाक्षु चरमवाचि ब्रह्मणीव दुर्ज्ञानत्वात् परमसौक्ष्म्यस्य सत्त्वेऽपि व्याकरणेन स्मरणमननिदिध्यासनैर्ब्रह्मसाम्यमवधारयतां यदा ब्रह्मसमवस्तुग्रहणयोग्या धीरुदयते तदा ब्रह्मणोऽपि प्रत्यक्षज्ञानस्य सौकर्य्यान्मोक्षं प्राप्नुवन्ति ते व्याकरणोपासका: ।

तदित्थं महत्त्वमादधानस्य व्याकरणस्योपासका: स्वाध्यायप्रवचनाभ्यां शास्त्रमिह भारते प्र-सारयन्तोऽध्यापनाऽध्ययनशीलाश्च कतिपये प्रतिभाजुष: शोधकर्म्मण्यपि संलग्ना 'आविष्कृतं नूतनं वा, प्राचीनं वा परिष्कृतमि'त्यभियुक्तनिदेशमनुसन्धायानुसन्धानपत्रमाविष्कुर्व्वन्ति, तेषु सत्सु विद्वत्सु अष्टादशलेखनशूराणां शोधपत्र: प्रपूरिता **'वाग्वै ब्रह्म'** इति नामधेया सन्दर्भिता पुनर्वीक्षिता च व्याकरणविभागीया मुम्बईपरिसरीया वार्षिकी राष्ट्रियशोधपत्रिका चतुर्थाङ्केनाङ्किता श्रीमताम् भवताम्पुरस्तात्पुरस्क्रियते ।

एतदर्थमाविष्कृतप्रज्ञाविवेकोपकल्पितशोधपत्रेभ्य अष्टादशविद्वद्भ्य:, पत्रिकायां पुष्पितत्व-फलितत्वप्रयोजकेभ्य: पुनर्वीक्षणविचक्षणेभ्य: सज्जनेभ्य:, संरक्षकेभ्य:, परिसरनिदेशकेभ्यश्च धन्यता-वाकं प्रशास्महे, आशास्महेऽनादिनिधनस्याक्षरस्य शब्दतत्त्वात्मकस्य ब्रह्मणस्तोष: तुष्टिं यायादिति ।

**सम्पादकपक्षत:**

# अनुक्रमणिका





# निरुक्तव्याकरणयोरर्थतत्त्वविमर्शः

✍प्रो. प्रकाशचन्द्रः

**(शब्दशास्त्रे शब्दस्य निरुक्तशास्त्रे चार्थस्य प्राधान्यम् । शब्दार्थौ च परस्परं सम्बद्धौ । तथा च व्याकरण-निरुक्तयोरपि सम्बद्धताऽऽयाति समक्षम् । शब्दमुद्दिश्य विधानं व्याकरणस्य, अर्थमुद्दिश्य च विधानं निरुक्तस्य कार्य्यम् । व्यवस्थया शब्दस्य सिद्धिः, व्यवस्थया चार्थस्य सिद्धिरुभयोः क्रमिकं लक्ष्यम् । एवञ्च शब्दार्थयोः तादात्म्यात् अर्थतत्त्वविमर्श इत्युक्ते शब्दशास्त्रार्थशास्त्रयोः माहात्म्यं स्वाभाविकम् । प्रकृतनिबन्धे व्याकरणं निरुक्तञ्चाधिकृत्य शब्दार्थनिर्वचनसिद्धान्तः सप्रमाणं निरूपितः ।)**

लोके व्यवहाराय वेदे च मन्त्रार्थज्ञानाय यथा शब्दोच्चारणं विना नार्थावगतिः तथैव अर्थंविना अर्थज्ञानं विना शब्दप्रयोगो नोपपद्यते । तथ्यमिदं महाभाष्यादौ सम्यक्तया प्रतिपादितं स्वीकृतञ्च दृश्यते । यथा 'सिद्धे शब्दार्थसम्बन्धे'[1] इति वार्तिकस्य व्याख्याने भाष्यकारः प्रश्नमुद्भाव्य कथयति 'कथं पुनर्ज्ञायते सिद्धः शब्दोऽर्थः सम्बन्धश्च'? समादधानः कथयति 'लोकतः' यल्लोकेऽर्थमुर्थमुपादाय शब्दान् प्रयुञ्जते, नैषा निर्वृत्तौ यत्नं कुर्वन्ति.. तावत्येवार्थमुपादाय शब्दान् प्रयुञ्जत ।[2] तावत्येवार्थमपादायेत्यस्याभिप्रायं स्पष्टयन् प्रदीपकारः कथयति । 'तावत्येवा-र्थमिति । बुद्ध्या वस्तु निरूप्येत्यर्थः ।'[3] पुनश्च शब्दस्य अर्थेनसह अर्थेन सहशब्दस्य च प्रयोगदृष्ट्या साहचर्यं विवृण्वन् 'अस्त्यप्रयुक्त'[4] इति आक्षेप - निराकरणप्रसङ्गे वार्तिकमाध्यमेन कथयति भाष्यकारः 'अस्त्यप्रयुक्त इति चेत् नार्थे शब्दप्रयोगात्' अस्त्यप्रयुक्त इति चेत्, तन्न । किं कारणम्? अर्थे शब्दप्रयोगात् । अर्थे शब्दाः प्रयुज्यन्ते । सन्ति चैषां शब्दानामर्था येष्वर्थेषु प्रयुज्यन्ते ।[5] भाष्याशयं स्पष्टयन् कैयटः कथयति 'अर्थे शब्दप्रयोगादिति । अर्थ-सद्भावः शब्दसद्भावे लिङ्गम् । न हि विना शब्देनार्थप्रत्ययानमुपपद्यते ।'[6] उद्योतकारोऽपि भाष्याशयं विवृण्वन् निगदति 'अर्थे शब्दप्रयोगादिति अर्थविषयकज्ञानाय शब्दप्रयोगादित्यर्थः ।'[7]

अयं विषयो वाक्यपदीयेऽपि विस्तरेण परिशीलितोऽस्ति, यथा शब्दार्थयोः सम्यग्ज्ञानं व्याकरणं विना नैव सम्भवतीति विमृशन् कथयति वाक्यपदीयकारः -

**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।**
**तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ।**[8]

अर्थाद् अर्थस्य प्रवृत्तितत्त्वं विवक्षा । विवक्षा हि योग्यशब्दनिबन्धना । योग्यं हि शब्दं प्रयोक्ता विवक्षा-प्रापितसन्निधानेष्वभिधेयेषु प्रत्यर्थमुपादत्ते । तद्यथोपलिप्स्यमानः प्रतिविषयं योग्यमेवेन्द्रियमुपलब्धौ प्रणिधत्ते ।[9] ता-त्पर्यमिदं यल्लोके विवक्षयैवार्थे शब्दप्रयोगरूपो व्यवहारो दृश्यते । विवक्षाणां निमित्तं शब्दा एव । 'यथेन्द्रियेणार्थ-मुपलिप्स्यमानः प्रतिविषयं योग्यमवेन्द्रियमुपलब्धौ प्रणिधत्ते, न रूपेण श्रोत्रमिति, एवं तदर्थाभिधानयोग्येनैव शब्देन

तमर्थं विवक्षतोति।'[10] शब्दार्थयोरनादिसम्बन्धयोग्यत्वाद् योग्यशब्दनिबन्धनैव अर्थविवक्षा शब्दप्रयोगेण व्यवहारसाधिका भवतीति भावः ।

मुनित्रयोपदिष्टव्याकरणसूत्रादीनां परिशीलनेन परिज्ञायते यद् व्याकरणमुभयविधलौकिकवैदिकशब्दानामनुशासनशास्त्रं विद्यते । तच्चास्ति षट्स्वङ्गेषु प्रधानं यथोक्तं भाष्यकारेण 'प्रधानं च षट्स्वङ्गेषु व्याकरणम्'[11]। अस्य कथं प्राधान्यमिति विषयं विवृण्वन् कथयति प्रदोपकारः 'पदपदार्थावगमस्य व्याकरणनिमित्तत्वात्तन्मूलकत्वाद्वाक्यवाक्यार्थावसायस्येति भावः'[12]। न केवलं षडङ्गेषु अस्य प्राधान्यं विद्यते अपितु प्रामाण्यदृष्ट्याऽपि अस्य प्राधान्यं स्वीक्रियते । यथाह भाष्यकारः 'शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम्'[13] । 'प्रमाणमिति । पामाणिकमित्यर्थः ।'[14] इति नागेशः ।

ये लौकिकशब्दा व्याकरणेन साधयितुमशक्यास्तेषां साधुत्वं 'पृषोदरादीनि यथोपदिष्टम्'[15] इत्यादि - निर्देशेन स्वीक्रियते तथा ये वैदिकशब्दा व्याकरणसूत्रैः प्रतिपादयितुं साधयितुं वा न शक्यन्ते तेषां सिद्धत्वं 'बहुलं छन्दसि'[16] व्यत्ययो बहुलम्[17] इत्यादिबाहुलकाश्रयेण निर्दिश्यते । उदात्तादिस्वरनियमा अपि व्याकरणद्वारा विशेषरूपेण निर्दिष्टास्सन्ति । वेदाङ्गेषु निरुक्तमपि शब्दार्थनिर्णयदृष्ट्या महत्वपूर्णं वेदाङ्गमस्ति । व्याकरणे निरुक्ते चोभयत्रापि शब्दमाहात्म्येन सह अर्थस्यापि समादरो दृश्यते । विषयविभागदृष्ट्या एतदपि वक्तुं शक्यते यद् यथा व्याकरणं शब्दानुशासनशास्त्रं तथैव निरुक्तम् अर्थानुशासनशास्त्रमस्ति । यद्यपि अथ शब्दानुशासनम् इव तत्र अथ अर्थानुशासनम् इत्यादिसूत्रं नास्ति तथापि ग्रन्थानुसन्धानेन तथा व्याख्यातृविद्वदनुभवसिद्धप्रमाणेनैतदर्थप्रधानं वेदाङ्गमस्ति, यथोक्तं दुर्गवत्तिकारेण 'किमुत निरुक्ते यदथप्रधानमेव ।[18]' अपि च 'नानिरुक्तार्थवित् कश्चिन्मन्त्रं निर्वक्तुमर्हति । इति च वृद्धानुशासनम्।'[19] पाणिनीयशिक्षानुसारं निरुक्तं वेदस्य श्रोत्रमुच्यते व्याकरणञ्च मुखमिति स्मर्यते। यथा द्रष्टव्यम् -

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।**
**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥**[20]

उभयोरङ्गयोः शब्दार्थज्ञानदृष्ट्या सर्वाधिकं महत्त्वं विद्यते । यथा शरीरे मुखेन शब्द उच्चार्यते तथा श्रोत्रेण श्रूयत इति द्वयोरपि मुखश्रोत्रयोर्महत्त्वं विद्यते तथैव शब्दज्ञानाय अर्थज्ञानाय चार्थाद् उभयोर्वेदाङ्गयोर्निरुक्तव्याकरणयोः सर्वविधशब्दार्थज्ञानाय महती शास्त्रीयपरम्परा वर्तते । यथा व्याकरणं शब्दप्रधानं शब्दसाधुत्वनिदर्शकं शास्त्रं विद्यते, प्रकृतिप्रत्ययविवेचनपूर्वकं शब्दसिद्धिकारकं प्रमाणभूतं वेदाङ्गं वर्तते, तथैव निरुक्तमर्थप्रधानं शास्त्रं विद्यते । विशेषतः वेदमन्त्राणामर्थज्ञानाय निरुक्तं प्रमाणभूतवेदाङ्गत्वेन स्वीक्रियते, यथा निरुक्तकारः स्वयमेवास्य मन्त्रार्थज्ञानायानिवार्यत्वं निर्दिशन् कथयति 'अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते अर्थमप्रतीयतो नात्यन्तं

स्वरसंस्कारोद्देशः'[21] अर्थान्निरुक्तं निर्वचनशास्त्रमन्तरेण मन्त्रेषु तत्र स्थितपदेषु अर्थज्ञानं न भवति, येन अर्थम-प्रतीयतोऽर्थमज्ञातवतो जिज्ञासोः कृते पूर्णरूपेण स्वरस्य संस्कारस्यार्थात् प्रकृतिप्रत्ययादीनां कथनं नोपपद्यते, अतः वेदार्थज्ञानाय व्याकरणेन सह निरुक्ताध्ययनमावश्यकं भवति । अतोऽग्रे कथयति 'तदिदं विद्यास्थानं व्याकरणस्य कात्स्न्यं स्वार्थसाधकं च'[22] अर्थनिदर्शनप्रधानत्वादेतच्छास्त्रं निर्वचनविद्यास्थानं निर्वचनज्ञानाभ्यासस्थानं विद्यते बहुषु पदेषु, यत्र व्याकरणद्वारा शब्दसिद्धिर्न सम्भवति तत्रापि निर्वचनद्वारा अर्थसाधकत्वादेतदस्ति व्याकरणस्य कात्स्न्यं पूरणत्वकारकं कृत्स्नत्वनिमित्तं भवति । स्वार्थसाधकञ्चास्ति निरुक्तमर्थात् निरुक्तं स्वमुख्यप्रयोजनवेदार्थपरिज्ञान-साधकत्वादेव स्वार्थसाधकं भवति । वेदमन्त्राणामर्थज्ञाननिदर्शने स्वतन्त्रनिर्वचनपद्धतिर्निरुक्तस्य स्वार्थसाधकत्वे प्रमाणमस्ति । अर्थमभिलक्ष्य शब्दानां निर्वचनं कथं कर्तव्यमिति निरुक्तस्य मुख्यविषयं निर्वचनविधिं प्रस्तुवन् लिखति यास्कमुनिः अर्थनिर्वचनम् 'यद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयात् ।'[23] निर्वचनशब्दं विवृण्वन् टीकाकारः दुर्गाचार्यः कथयति 'अपिहितस्य अर्थस्य परोक्षवृत्तौ अतिपरोक्षवृत्तौ वा शब्दे निष्कृष्य विगृह्य वचनं निर्वचनम्'[24] अर्थात् शब्द अर्थोऽज्ञातप्रकृतिप्रत्ययादिस्वरूपेण अर्थात् परोक्षरूपेण कदाचिद् अतिपरोक्षस्वरूपेण अन्तर्हितो भवति, शब्दे प्रकृतिप्रत्ययादीन् विभागशः निष्कृष्य विग्रहपूर्वकमर्थस्य वचनं कथनं निर्वचनं भवति । तत्र निर्वचनविधौ 'येषु पदेषूदात्तादिस्वरः प्रकृतिप्रत्ययसंयोगरूपः संस्कारश्चोभौ तौ सङ्गतौ युक्तौ साक्षाद्भूतौ प्रत्यक्षं प्रदेशेन प्रविभक्तदेशभवेन प्रकृतिप्रत्ययाद्यवयवशक्तियोगे न युक्तौ भवेतां तानि तथैव निर्ब्रूयाद् विश्लेषयेत् पृथक् पृथक् विभज्य कथयेत् ।' यथा 'इह त्वष्टारमग्रियं विश्वरूपमुपह्वये' (ऋग्वदः 1/13/10) । अत्र 'त्वष्टारम्' इति कृदन्तम्, 'अग्रियम्' इति तद्धितान्तम्, 'विश्वरूपम् इति समस्तं पदं स्वर-संस्काराभ्यां युक्तम्'[25]। यत्र व्याकरणनिर्दिष्टप्रकृतिप्रत्ययादयः स्पष्टतया न परिज्ञायन्ते तत्र शब्दस्य निर्वचनं कथं विधेयमिति दृष्ट्या निर्वचनविधिं निर्दिशन् कथयति निरुक्तकारः 'अथानन्वितेऽर्थेऽप्रादेशिके विकारे अर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येन ।'[26] 'अथ पुनरननुगतेऽर्थे शब्दतः साक्षादज्ञातेऽर्थे प्रविभक्तदेशभवस्वरसंस्कारप्रकृति-प्रत्ययादिस्पष्टताहीने पदेऽर्थनित्यः अर्थो नित्यो यस्य सः, न हि वेदशब्दा अर्थहीनास्तथाऽर्थं संलक्ष्य पदं परीक्षेत निब्रूयात् केनचिद्वृत्तिसामान्यनार्थं स्पष्टयता प्रवृत्तिसामान्येन ।'[27]दुर्गाचार्योऽपि यास्काशयं विमृशन् निगदति 'अर्थ-नित्य इत्युक्तेऽर्थप्रधान इति गम्यते । अर्थं प्राधान्येनादृत्य स्वरसंस्कारौ परीक्षेत । ततस्तदभिधानं बुद्ध्वा केनचिद्-वृत्तिसामान्येन क्रियागुणसामान्येनेत्यर्थः । अर्थो हि प्रधानं तद्गुणभूतः शब्दः तस्मादर्थसामान्यं बलीयः शब्द-सामान्यात् ।'[28] यथा 'यो अस्मै ध्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह ।' (ऋग्वेदः 5/34/3) अत्र मन्त्रे 'ऊधस्' रात्रिवाचकः, 'ऊधोरात्रिनाम' (निघण्टुः 1/7) पशोः स्तनयुक्तं दुग्धाधानमुच्यते । तस्य स्नेहवृत्तिसामान्येन रात्रिरूधः, उक्तमूधस्तु निरुक्ते 'स्नेहानुप्रदानसामान्याद् रात्रिरप्यूध उच्यते ।' (नि. 6/19)[29] तदेव

स्नेहगुणवृत्तिसामान्येन 'ऊधस्' शब्दो निरुक्तः, अर्थस्य प्राधान्यादिति भावः । अनेन गुणक्रियादिवृत्तिसामान्येन अनेके शब्दा अर्थपरीक्षणपूर्वकं निरुक्ते निवचनविधिना निरुक्ता द्रष्टुं शक्यन्ते ।

शब्दस्य अर्थं ज्ञातुं निर्वचनस्यानिवार्यत्वमुद्दिश्य अग्रे निरुक्तकारः कथयति 'अविद्यमाने सामान्येऽप्यक्षर-वर्णसामान्यान्निर्ब्रूयात् । न त्वेव न निर्ब्रूयात् । न संस्कारमाद्रियेत । विशयवत्यो हि वृत्तयो भवन्ति, यथार्थं विभक्तीः सन्नमयेत् ।'[30] ग्रन्थाशयं स्पष्टयन् टीकाकारः कथयति 'अथ वृत्तिसामान्येऽविद्यमानेऽपि अक्षरसामान्याद् वर्णसामान्याद् निर्ब्रूयाद् विश्लेषयेद् विभजेत पदम् । अक्षरसामान्यादर्थात् स्वरसामान्याद् वर्णसामान्यादर्थात् व्यञ्जन-सामान्यादपि निर्ब्रूयान्निर्वचनं कुर्यादेव, 'न त्वेव न निर्ब्रूयात्' अवश्यमेव निर्ब्रूयात् निर्वचनं न परित्यजेदर्थजिज्ञासुरिति भावः । न संस्कारमाद्रियेत् अर्थाद् अनन्वितेऽर्थेऽप्रादिशिके विकारे संस्कारादरस्य कः प्रसङ्गः, यत्र प्रकृतिप्रत्ययौ स्पष्टौ न भवतः अर्थापेक्षा तु सर्वत्रास्ति तत्र पदे व्याकरणसम्बद्धसंस्कारमन्तरेण हि निर्ब्रूयात् संस्कारस्य चिन्तां न कुर्यात् । यतो हि विशिष्टाशयवत्यो हि वृत्तयः पदवृत्तयः पदप्रवृत्तयः पदपदार्थवृत्तयश्च भवन्ति, अतो 'यथार्थं विभक्तीः सन्नमयेत्' अर्थमनतिक्रम्य पदविभागान् सङ्कल्पयेत् ।[31] यथार्थं पदविभागकरणमपि निर्वचनपद्धत्तेरेकं स्वरूपमस्ति ।

वर्णसामान्यस्योदाहरणद्वयं प्रस्तुवन् कथयति ग्रन्थकारः 'प्रत्तमवत्तमिति धात्वादी एव शिष्येते'[32] । प्रत्तम् इत्यत्र 'डुदाञ् दाने' धातोः क्तप्रत्यये 'दा' इत्यस्य धातोरादिभागः 'द्' शिष्टः । 'अवत्तम्' इत्यत्र अवपूर्वकस्य 'दो' अवखण्डने इति धातोरादिभागः 'द्', 'शिष्टः' इति निरुक्तशैल्यां वर्णसामान्यस्योदाहरणम् । व्याकरणरीत्याञ्च 'अच् उपसर्गात्तः' (अष्टा. 7/4/47) सूत्रेण सिद्धिः क्रियते । उभयोः पदयोः वैदिकोदाहरणे द्रष्टुं शक्येते 'ब्रह्मणे ददाति ब्रह्मणे प्रत्तम्' (गो. पू. 2/21) 'अङ्गादङ्गादवत्तानां करत' (यजुर्वेदः 21/43)[33] ।

निरुक्ते ततोऽग्रे बहवो निर्वचनसिद्धान्ता उदाहरणसहिता निर्दिष्टास्सन्ति । यद्यपि तत्र व्याकरणनिर्दिष्ट-सूत्रनियमाः प्रवृत्तिमर्हन्ति तथापि यास्कमुनिर्निर्वचनपद्धत्त्या सिद्धान् वेदशब्दान् निर्वक्तुं निर्दिशति, अर्थं प्राधान्येन परीक्ष्य शब्दस्य निर्वचनं विधेयमेव निर्वचनं विना वेदशब्दस्य अर्थावगतिर्न भवितुमर्हतीति निरुक्तस्य मुख्य-सिद्धान्तः ।

अत्रैतत्तथ्यमनुसन्धेयमस्ति यच्छब्दस्य व्यापकत्वात् सिद्धत्वानित्यत्वाच्च बहवः शब्दा लोके वेदे च समा-नरूपेण समानार्थाः प्रयुक्ताः दृश्यन्ते तत्रापि बहूनां शब्दानां प्रकृतिप्रत्ययादिव्याकरणद्वारा सिद्धत्वेऽपि तत्तच्छब्दस्य सः सोऽर्थः कथं भवतीति निरुक्तं शब्दव्युत्पत्तिद्वारा तात्त्विकार्थप्रतिपादने सामर्थ्यं धत्ते, तदेवास्ति तस्य व्याकरणात् किञ्चिद्भिन्नत्वम् ।

यथा दिङ्मात्रं केचन शब्दा लोके वेदे च प्रयुज्जमानाः निरुक्तविहितार्थदृष्ट्या द्रष्टुं शक्यन्ते –

**आचार्य्यः** – 'आचार्य्य आचारं ग्राह्यति, आचिनोत्यर्थान्, आचिनोति बुद्धिमिति वा ।'[34]

**शाखा** - 'शाखाः खशयाः, शक्नोते र्वा ।'[35]

**दक्षिणा** - 'दक्षिणा दक्षतेः समर्द्धयति कर्मणो व्यृद्धं समर्द्धयतीति, अपि वा प्रदक्षिणा गमनाद् दिशमभिप्रेत्य।'[36]

**वीरः** - 'वीरो वीरयत्यमित्रान्, वेतेर्वा स्याद्गतिकर्मणः वीरयतेर्वा ।'[37]

**सीमा** - 'सीमा मर्यादा विसीव्यति देशाविति ।'[38]

**ब्रह्मा** - 'ब्रह्मा सर्वविधः, सर्वं वेदितुमर्हति । ब्रह्मा परिबृंहः श्रुततः, ब्रह्म परिबृंहं सर्वतः ।'[39]

**आस्यम्** - 'आस्यमस्यतेः, आस्यन्दतः एतदन्नमिति वा ।'[40]

**नरकम्** - 'नरकं न्यरकं नीचैर्गमनं, नास्मिन् रमणं स्थानमल्पमप्यस्तीति वा ।'[41]

**गिरिः** - 'गिरिः पर्वतः समुद्गीर्णो भवति ।'[42]

तदेवमुभयोर्वेदाङ्गयोर्विषयपरिशीलनेनैतद् वक्तुं शक्यते यद् 'व्याकरणस्य कात्स्न्यें' 'न संस्कारमाद्रियेत' इत्यादिनिरुक्तवचनैर्व्याकरणस्यापूरणत्वं लक्षयितुं न शक्यत, यतो हि व्याकरणं विना निरुक्तविषयोऽपि सम्यक्तयाऽवगन्तुं नैव पार्यते । येऽपि शब्दा निरुक्तकारेण विषयप्रतिपादनाय स्वग्रन्थे प्रयुक्तास्सन्ति ते सर्वेऽपि व्याकरणसिद्धास्सन्ति ।

उभेऽपि वेदाङ्गे शब्दस्वरूपसिद्धये अर्थतत्त्वावगतये च परस्परं पोषके स्तः । एकेन प्रधानरूपेण शब्दसाधुत्वं निश्चीयते अपरेण मुख्यरूपेण निर्वचनादिविविधोपायैर्वेदमन्त्रशब्दार्थो विचार्यते निर्धार्यते च । निरुक्तमध्येतुं व्याकरणाध्ययनमावश्यकमस्ति किन्तु वेदार्थज्ञानाय व्याकरणेन सह निरुक्ताध्ययनमनिवार्यं भवतीत्यभिप्रायः ।

**'योऽर्थज्ञ इत्सकलं भद्रमश्नुते ।'**[४३]

**'अर्थं वाचः पुष्पफलमाह ।'**[४४]

**'सोऽनन्तमाप्नोति जयं परत्र ।'**[४५]

**'भद्रैषां लक्ष्मीर्निहिताऽधि वाचि ।'**[४३]

एवं विधैर्निरुक्तकारमहाभाष्यकाराद्युक्ताप्तप्रमाणैरर्थज्ञानस्य तथा अर्थज्ञानपूर्वकशब्दप्रयोगस्य महात्म्यमनिवार्यत्वञ्च प्रमीयते, 'तस्मादनर्थकं माधिगीष्महि'[47] इत्यादिभाष्यकारनिर्देशमपि सर्वदा परिपालयितुं यत्नो विधेय इति शम् ।

**सन्दर्भाः** -

1. महाभाष्यम् पस्पशाह्निकम् ।
2. तदेव ।
3. तत्रैव प्रदीपः ।
4. महाभाष्यपस्पशाह्निकम् ।

5. तदेव ।
6. तत्रैव प्रदीपः ।
7. तत्रैवोद्योतः ।
8. वाक्यपदीयम् 1-13 ।
9. तत्रैवस्योपज्ञवृत्तिः ।
10. तत्रैव अम्बकर्त्रीव्याख्या ।
11. महाभाष्यपस्पशाह्निकम् ।
12. तत्रैव प्रदीपः ।
13. महाभाष्यपस्पशाह्निकम् ।
14. तत्रैवोद्यतः ।
15. अष्टाध्यायी 6/3/109 ।
16. अष्टाध्यायी 2/4/39, 2/4/73, 2/4/76, 3/2/88, 5/2/122, 6/1/34, 7/1/8, 7/1/10, 7/1/103, 7/3/87, 7/4/78 ।
17. 3/1/85 ।
18. निरुक्तदुर्गवृत्तिः 2/2 ।
19. निरुक्तसमुच्चयः पृ. 1 ।
20. पाणिनीयशिक्षा - 41-42 ।
21. निरुक्तम् - 1/5 ।
22. तदेव ।
23. निरुक्तम् 1/5 ।
24. तत्रैव दुर्गवृत्तिः ।
25. तत्रैव निरुक्तसम्मर्शः ।
26. निरुक्तम् 2/1 ।
27. तत्रैव निरुक्तसम्मर्शः ।
28. तत्रैव दुर्गवृत्तिः ।
29. तत्रैव निरुक्तसम्मर्शः ।
30. निरुक्तम् 2/1 ।

31. तत्रैव निरुक्तसम्मर्शः ।
32. निरुक्तम् 2/1 ।
33. तत्रैव निरुक्तसम्मर्शः ।
34. निरुक्तम् 1-2 ।
35. तदेव 1-2 ।
36. तदेव 1-3 ।
37. तदेव 1-3 ।
38. तदेव 1-3 ।
39. तदेव 1-3 ।
40. तदेव 1-3 ।
41. तदेव 1-3 ।
42. तदेव 1-6 ।
43. तदेव 1-6 ।
44. तदेव 1-6 ।
45. महाभाष्यपस्पशाह्निकम् ।
46. तदेव ।
47. तदेव ।

आचार्यः ( सेवानिवृत्तः ), व्याकरणविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः
क. जे. सोमैयापरिसरः
विद्याविहारः, मुम्बई ।



# व्याकरणभाषाविज्ञानोभयदृष्ट्या संस्कृतभाषासन्धिविचारः

प्रो. अशोकचन्द्रगौड़शास्त्री

**('संहितायाम्' इत्यत आरभ्य 'पारस्करप्रभृतीनि च'त्यन्तं संहिताधिकारः, 'तयोर्य्वावचि संहितायाम्' इत्यत आरभ्य 'अ अ' इति यावत् 'संहितायामि'त्यस्य सम्बन्धः । संहिता सन्धिरिति पर्य्यायः । कस्यचिद्वर्णस्योच्चारणानन्तरमर्धमात्राऽऽधिकालाव्यवधानेन यद्वर्णान्तरोच्चारणं तत् संहितयोच्चारणमित्युच्यते । सन्धेर्विभागश्च व्याकरणे पञ्चधा प्रसिद्धः । वस्तुतः शाब्दिकमते सृष्टिस्थितिसंहारभेदात् त्रिविधः सन्धिरिति पण्डितरूपैरनुशोचनीयम् । प्रकृतनिबन्धे व्याकरणसूत्रसन्दर्भप्रामाण्यपुरस्सरं सन्धीनां वर्गीकरणं सोदाहरणं समुपन्यस्तम् । नामकरणञ्च सन्धीनां तत्र तत्र स्वरूपानुगुणं कृतं विद्यते । तदेतद्रूपस्वनिमविज्ञानविवेकपरमिति बोध्यम् ॥)**

**प्रस्तावना** – संस्कृतव्याकरणशास्त्रस्य परम्परा अतीव प्राचीनतमा वर्तते । तत्र सन्धेः कृते 'संहिता' शब्दः प्रयुक्तः, तथैव आधुनिकभाषाविज्ञाने रूपविज्ञाने 'रूपस्वनिमविज्ञानम्' इत्याख्यस्य विभागस्य कृते पाश्चात्त्याः 'सन्धि' शब्दं प्रयुक्तवन्त इति कपिलदेवद्विवेदी महोदयः सूचितवान्, समर्थितवांश्च स्वग्रन्थे ।[1] 'संहिता' शब्दः तन्मते संस्कृतभाषायाः 'संहिता' शब्दतोऽधिकं व्यापकोऽस्ति । तदन्तर्गते च 'मार्फोफोनीमिक्स' शब्दस्य कृते 'संहिता' शब्दोऽधिकमुपयुक्तोऽस्ति । पाणिनिराचार्यः संहिताया लक्षणं कुर्वन् कथयति यद् वर्णानां पदानां वा निकटतमः सम्पर्कः, तेन च जायमानानि सर्वाणि ध्वनिपरिवर्तनादीनि कार्याणि 'संहिता' नाम्नोच्यन्ते ।[2] अत एव यजुर्वेदादयः 'संहिता' नाम्नोच्यन्ते । यतो ह्यत्र संहितामूलकानि सर्वाणि सन्ध्यादीनि कार्याणि सञ्जातानि । संहिताकार्ये सत्येव मन्त्रः स्वीयवास्तविकरूपे प्रयुज्यते । संहिता सन्धिरित्यनर्थान्तरम् ।

जनेषु प्रसिद्धिर्वर्तते यद् वाक्ये सन्धिर्वैकल्पिकः ।[3] तदुक्तम् –

**संहितैकपदे नित्या नित्या धातूपसर्गयोः ।**
**नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥**

अत्रेदमवधेयम् यद् निर्धारितसीमायामेव सन्धिर्वाक्ये वैकल्पिकः । संहिता स्वरवर्णानां व्यञ्जनवर्णानां अयोगवाहानाम् (विसर्गाणां) परस्परं सन्निधानम् । किन्तु यत्र विरामो नास्ति तत्रैव सन्धिनियमाः प्रवर्तन्ते । विरामे सन्धिर्न भवति ।

संस्कृतव्याकरणशास्त्रे सन्धिः मुख्यतस्त्रिधा भवति – स्वरसन्धि – व्यञ्जनसन्धि – विसर्गसन्धिभेदात् । भट्टोजिदीक्षितमहोदयेन वैयाकरणसिद्धान्तकौमुद्यां स्वादिसन्धिः, पृथग्रूपेण निर्दिष्टः । किन्तु स्वादिसन्धिः हल्सन्धौ, विसर्गसन्धौ वा समावेष्टुं शक्यते । व्याकरणशास्त्रे स्वरसन्धिः अचसन्धिरुच्यते । अचः स्वराः । प्रत्याहारसूत्रेषु

(माहेश्वरसूत्रेषु) प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा अनेनेति प्रत्याहार इति नियमात् 'अ इ उ ण्' इत्यारभ्य 'ए औ च्' इति यावत् सर्वेऽपि वर्णा 'अच्' नाम्नोच्यन्ते । आचार्येण पतञ्जलिनोक्तम् -

**स्वयं राजन्त इति स्वराः । अन्वग् भवति व्यञ्जनम् ॥**[४]

तदनुसारेण येषामुच्चारणे अन्यवर्णानां साहाय्यं न गृह्यते ते स्वराः । येषाञ्चोच्चारणे स्वराणां साहाय्यं गृह्यते ते व्यञ्जनवर्णा उच्यन्ते । स्वरास्त्रिविधाः - ह्रस्वदीर्घप्लुतभेदात् । तत्र ह्रस्वः एकमात्रिकः दीर्घो द्विमात्रिकः, प्लुतश्च त्रिमात्रिकः । शास्त्रे व्यञ्जनसन्धिः हल्सन्धिनाम्नोच्यते । हल् प्रत्याहारः । प्रत्याहारसूत्रेषु 'हयवरट्' इत्या-रभ्य 'हल्' इति यावत् सर्वेऽपि वर्णा हल् नाम्नोच्यन्ते ।

स्वरसन्धिः, अच्सन्धिर्वा पञ्चधा-दीर्घसन्धिः, गुणसन्धिः, वृद्धिसन्धिः, यण्सन्धिः, अयादिसन्धिश्चेति भेदात् । अत्रैव पूर्वरूपम्, पररूपम्, प्रकृतिभावश्चैते व्यञ्जनसन्ध्यः, हल्सन्धिर्वा-इत्यत्र श्चुत्वम्, ष्टुत्वम्, अनु-नासिकादेशः, चर्त्वम्, परसवर्णः, कुक्टुकाद्यागमाः समाविशन्ति । विसर्गसन्धौ विसर्गस्य सत्वविधानम्, विसर्गस्य विसर्गविधानम्, विसर्गस्य षत्वं समाविशन्ति । सिद्धान्तकौमुद्यां निर्दिष्टे स्वादिसन्धौ सस्य रुत्वम्, रोः उत्वम्, पूर्वसवर्णदीर्घः, यवलोपाश्चेत्यादीनि कार्याणि समाविशन्ति ।

**संस्कृतभाषासन्धयः** - भाषाविज्ञानस्य दृष्ट्या संस्कृतभाषायाः सन्धयो निम्नलिखितरूपेण प्रस्तुतीकर्तुं शक्यन्ते । तेभ्यः सन्धिभ्यः अच्सन्धि-हलसन्धि-विसर्गसन्धि-प्रभृतीनि अस्पष्टानि नामानि न दत्त्वा स्वरूपबोधक-नामप्रदानेन संस्कृतसन्धीनां निम्नाङ्किता भेदाः भविष्यन्ति -

1. **गुणीकरणम्, गुणैकादेशविधानं वा**[५] - द्वयोः विविधस्थानीयह्रस्वदीर्घमूलस्वरयोः संयोगेन एकस्य स्वतन्त्रः स्वरध्वनिः (अ (अर्), ए, ओ इति वा स्वरः)[6] उत्पद्यते । उदाहरणार्थम् -

   अ + इ = ए > देव + इन्द्रः = देवेन्द्रः ।

   अ + उ = ओ > सूर्य + उदय = सूर्योदयः ।

   अ + ऋ = अर् > राज + ऋषिः = राजर्षिः ।

2. **वृद्धीकरणम्, वृद्ध्येकादेशविधानं वा** - द्वयोर्विविधस्थानीयह्रस्वदीर्घमूलस्वरयोः संयोगेन एकः स्वतन्त्र स्वरध्वनिः (आ (आर्), ऐ, औ इति वा स्वर)[7] उत्पद्यते । अत्र पूर्वपदे अकारः, आकारो वा भवति, उत्तरपदे च  ए, ऐ, ओ, औ वर्णो भवति । उदाहरणार्थम् -

   अ + ए = ऐ > छात्र + एकता = छात्रैकता ।[8]

   अ + ओ = औ > जल + ओघः = जलौघः ।[8]

   अ + ए = ऐ > प्र + एति = प्रैति ।[9]

   उपसर्गः + ऋवर्णान्तधातुः = अ + ऋ = आर् > उप + ऋच्छति = उपार्च्छति ।[10]

3. **दीर्घीकरणम्** [११] - द्वयोः समस्थानीय ध्वन्योः संयोगेन एको दीर्घः स्वरध्वनिः (ईकारः, ऊकारः, ॠकारः वा) उत्पद्यते । उदाहरणार्थम्

गिरि + ईशः = गिरीशः ।

भानु + उदयः = भानूदयः ।

4. **व्यञ्जनीकरणम् (यणादिविधानम्)** - इदं द्विविधं भवति - पूर्णव्यञ्जनीकरणम्, यथा - यण् - सन्धिः । अपूर्णव्यञ्जनीकरणम्, यथा - अयादिसन्धिः । असमाने स्वरे परतः इ - उ - ऋ स्वराणाम् (इकः) क्रमशः यण् (य्-व्-र्) व्यञ्जनं भवति ।[12] यथा -

इ + ए = य् > प्रति + एकः = प्रत्येकः ।

उ + अ = व् > अनु + अयः = अन्वयः ।

ऋ + आ = र् > मातृ + आ = मात्रा ।

तथा च संयुक्तस्वराणाम् ए, ऐ, औ, औ (एचः) इत्येषां स्थाने स्वरस्याऽऽदिमोंऽशः अकारः, आकारो वाऽवशिष्यते, शेषांशस्य 'य', 'व' आदेशौ भवतः अर्थात् अय्, अव्, आय्, आव इत्येते आदेशाः[13] भवन्ति । उदाहरणार्थम् -

ए + अ = अय् > नै + अयन् = नयनम् ।

ओ + अ = अव् > पो + अन् = पवनम् ।

ऐ + अ = आय् > नै + अकः = नायकः ।

औ + अ = आव् > पौ + अकः = पावकः ।

ओ + य = अव् > गौ + यम = गव्यम् ।[14]

5. **स्वरीकरणम्** - व्यञ्जनस्य स्वरविधानम् । इदमपि द्विविधम् - 1. विसर्गस्य, रेफस्य वा उकारः ।[15] 2. सम्प्रसारणकार्यम् - य्, व्, र् वर्णानां क्रमशः इकार-उकार-ऋकाराः ।[16] उदाहरणार्थम् -

: (विसर्गः) + अ = उ > औ > कः + अयम् = कोऽअयम् ।

: (विसर्गः) + ग = ओ > रामः गच्छति = रामो गच्छति ।

व + वाहः = व् + ऊहः > वौहः > विश्व + वाहः = विश्वौहः ।

य > इ > यजः + तः = इष्टः ।

व > उ > वच् + ति = उक्तिः ।

प्र > पृ > प्रच्छ् + तम् = पृष्टम् ।

6. **विसर्जनीयकरणम्, विसर्गीकरणं वा**[१७] - सकारस्य, रेफस्य वा विसर्जनीय (:) विधानम् । उदाहरणार्थम् -

र् > : > पुनर् = पुनः ।

स् > : > रामस् = रामः ।

स् + सु = :सु > पयस् + सु = पयः सु ।

7. **अघोषीकरणम्, चर्त्वविधानं वा**[१८] - घोषस्य, नादस्य वा ध्वनेः (वर्ग स्य तृतीय-चतुर्थ ध्वन्योः - ग-घ-ज-झ-ड-ढ-द-ध-ब-भ-ध्वनीनाम्) अघोषत्व (क्-च्-ट्-त्-प्-वर्ण) विधानम् । अर्थात् चर्त्व-सन्धिः । उदाहरणार्थम् -

द > त > तद् + परः = तत्परः ।

उद् + थानम् = उत्थानम् ।

ग् > क् > वाग् + पतिः = वाक्पतिः ।

8. **घोषीकरणम्**[१९]**, जश्त्वविधानं वा** - अघोषस्य ध्वनेः (वर्णस्य प्रथमद्वितीयध्वन्योः - क-ख-च-छ-ट-ठ-त-थ-प-फ ध्वनीनाम्) घोषत्व विधानम् (क्रमशः ग-ज-ड-द-ब ध्वनिविधानम्) । उदाहरणार्थम् -

त् > द् > जगत् + ईशः = जगदीशः ।

च् > ज् > अच् + अन्तः = अजन्तः ।

प् > ब् > सुप् + अन्तः = सुबन्तः ।

अप् + धिः = अब्धिः ।

9. **अल्पप्राणीकरणम्**[२०] - महाप्राणध्वनीनाम् (ख-घ-छ-झ-ठ-ढ-थ-ध-फ-भ ध्वनीनाम्) अल्पप्राणत्व-विधानम् (क-ग-च-ज-ट-ड-त-द-प-ब ध्वनिविधानम्) । उदाहरणार्थम् -

ध + ध = द्ध > ध् > द् > शुध् + धिः = शुद्धिः ।

ध + ध = ग्ध > घ > ग > दुघ् + धम् = दुग्धम् ।

ध + ध = ग्ध > घ > ग > दघ् + धः = दग्धः ।

10. **महाप्राणीकरणम्**[२१] - अल्पप्राणध्वनीनाम् (क-ग-च-ज-ट-ड-त-द-प-ब ध्वनीनाम्) महाप्राणत्व-विधानम् (ख-घ-छ-झ-ठ-ढ-थ-ध-फ-भ ध्वनिविधानम्) । उदाहरणार्थम् -

द > ध् > दुह् + स् = धुक् ।

ब् > भ् > बुध् + भ्याम् = भुदभ्याम् ।

11. **अनुनासिकीकरणम्**[२२] - अनुनासिकीकरणं द्विधा - अनुनासिकध्वनीनाम् अनुनासिकत्वविधानम्, मकार-स्य नकारस्य वाऽनुस्वारविधानं चेति । उदाहरणार्थम् -

त > न् > तत् + मयम् = तन्मयम् ।

यत् + न = यन्न ।

क् > ङ् > वाक् + मयम् = वाङ्मयम् ।

म > ं (अनुस्वारः) > किम् + करोति = किं करोति ।

12. **समीकरणम्** - द्वयोः विषमव्यञ्जनध्वन्योः एकरूपत्वसम्पादनम्, एकस्थानीयत्व सम्पादनं वा । अस्य निम्नाङ्किताः षड् भेदा भवन्ति -

(क) तालव्यीकरणम् (Palatalization), श्चुत्वसन्धिर्वा ।

(ख) मूर्धन्यीकरणम् (Cerebralization), ष्टुत्वसन्धिर्वा ।

(ग) पुरोगामि समीकरणम्, पूर्वसवर्णो वा (Progressive Assimilation) ।

(घ) पश्चाद्गामि समीकरणम्, परसवर्णो वा (Regressive Assimilation) ।

(ङ) अनूष्मीकरणम् (De-Assibilation) ।

(च) ऊष्मीकरणम् (Assibilation) ।

**(क) तालव्यीकरणम् (Palatalization), श्चुत्वसन्धिर्वा**[२३] - सकारस्य शकारः । पूर्वं पश्चाद्वा तालव्ये ध्वनौ समीपस्थस्य सकारस्य, तवर्गस्य वा ध्वनेस्तालव्यविधानम् । उदाहरणार्थम् -

स > श् > हरिस् + शेते = हरिश्शेते ।

रामस् + च = रामश्च ।

द् > ज् > सद् + जनः = सज्जनः ।

त् > च् > सत् + चित् = सच्चित् ।

न् > ञ > याच् + ना = याच्ञा ।

**(ख) मूर्धन्यीकरणम् (Cerebralization), ष्टुत्वसन्धिर्वा**[२४] - पूर्वं पश्चाद्वा मूर्धन्ये ध्वनौ (ष-टवर्ग) विधानम् । उदाहरणार्थम् -

स् > ष > रामस् + षष्ठः = रामष्षष्ठः ।

दुस् + तः = दुष्टः ।

त् > ट् > हृस् + तः = हृष्टः । पुष् + तः = पुष्टः ।

द् > ड् > उद् + डीनः = उड्डीनः ।

न् > ण > विष् + नुः = विष्णुः ।

कृष् + नः = कृष्णः ।

**(ग) पुरोगामि समीकरणम्, पूर्वसवर्ण विधानं वा**[२५] **(Progressive Assimilation)** -
पूर्वध्वनेराधारेण परवर्तिनो व्यञ्जनस्य पूर्वध्वनितुल्यत्वविधानम् । उदाहरणार्थम् -

स् > त् > उत् + स्थानम् = उत्थानम् । तलोपोऽपिजातः ।

ह् > घ् > वाग् + हरिः = वाग्घरिः ।

ह् > ध् > तद् + हितः = तद्धितः ।

**(घ) पश्चाद्गामि समीकरणम्, परसवर्ण विधानं वा (Regressive Assimilation)** - परवर्तिनो ध्वनेराधारेण पूर्ववर्तिनो ध्वनेः परवर्तिध्वनितुल्यत्वविधानम् । उदाहरणार्थम् -

तकारस्य दकारस्य वा लकारः ।[26] यथा -

त् > ल् > तत् + लीनः = तल्लीनः ।

द् > ल् > पद् + लवः = पल्लवः ।

नकारस्य सानुनासिको लकारः ।[27] यथा -

न् + ल् = लं > विद्वान् + लिखति = विद्वांल्लिखति ।

अनुस्वारस्य ङ्कारो, नकारश्च ।[28] यथा -

अं + कः = अङ्कः, शां + तः = शान्तः ।

**(ङ) अनूष्मीकरणम्**[२९] **(De-Assibilation)** - समीकरणस्य कृते ऊष्मध्वनीनां (श्, ष्, स् ध्वनीनां) ऊष्मरहितत्वविधानम् । उदाहरणार्थम् -

श् > छ् > तत + शिव = तच्छिवः ।

सकारस्य विसर्गविधानमपि अनूष्मीकरणम् अस्ति । यथा -

रामस् > रामः ।

**(च) ऊष्मीकरणम्**[३०] **(Assibilation)** - ऊष्मभिन्नध्वनीनां ऊष्मत्व (श्, ष्, स्) विधानम् ।

13. **विषमीकरणम्**[३१] **(Dissimilation)** - समानध्वनिषु एकस्य, सामान्यतया पूर्ववर्तिनो ध्वनेः विषमत्वविधानम् । उदाहरणार्थम् -

ध् > द् > युध् + धम् = युद्धम् ।

बुध् + धिः = बुद्धिः ।

थ् > त् > उथ् + थानम् = उत्थानम् ।

14. **मूर्धन्यीकरणम्** (**Cerebralization**) - अमूर्धन्यध्वनीनां मूर्धन्यत्व (षत्व-णत्वादि)-विधानम् । रषाभ्यां परस्य नस्य णत्वं भवति ।[32] अटाम् (स्वराणाम्, अन्तः स्थानां च) व्यवधाने सत्यपि नस्य णत्वं भवति ।[33] उदाहरणार्थम् -

र् + ण > राम + इन = रामेण ।

इण्कवर्गाभ्यां परयोः आदेशप्रत्यययोः सस्य षत्वं भवति ।[34] यथा -

स् > ष् > रामे + सु = रामेषु । एवमेव हरिषु, भानुषु इत्यादयः ।

15. **अननुनासिकीकरणम्, अनासिक्यकरणम् वा** (**De-Nasalization**) - अनुनासिकध्वनीनां (न-मादीनां) अनुनासिकभिन्नत्वविधानम् । उदाहरणार्थम् -

न् > स्[35] > कान् + कान् = कांस्कान् ।

तान् + तान् = तांस्तान् ।

म् > स्[36] = म् > रु > र् > : (विसर्ग) > स् > पुम् + कोकिलः = पुंस्कोकिलः ।

16. **पूर्वरूपस्य विधानम्**[३७] (**Regressive Assimilation**) - द्वयो समविषमस्वरयोः केवलं पूर्ववर्तिनः स्वरस्य शेषत्व विधानम् । उदाहरणार्थम् -

अ + अ = अ > राम + अम् = रामम् ।

इ + अ = इ > हरि + अम् = हरिम् ।

ए + अ = ए > हरे + अव = हरेऽव ।

हरे + अः = हरेः ।

ओ + अ = ओ > विष्णो + अव = विष्णोऽव ।

विष्णो + अः = विष्णोः ।

17. **पररूपस्य विधानम्**[३८] (**Progressive Assimilation**) - द्वयो समविषमस्वरयोः केवलं परवर्तिनः स्वरस्य शेषत्वविधानम् । उदाहरणार्थम् -

अ + ए = ए > प्र + एजते = प्रेजते ।

अ + ओ = ओ > उप + ओषति = उपोषति ।

शिवाय + ओम = शिवायोम् ।

अ + अ = अ > भव + अन्ति = भवन्ति ।

अत् + इ = इ > पटत् + इति = पटिति ।

18. **ह्रस्वीकरणम् ( Shortening )** - द्वयोर्विषमध्वन्योर्मेलने पूर्ववर्तिनो ध्वनेह्रस्वत्वविधानम् । उदाहरणार्थम् -

ई + इ[39] = चक्री + अत्र = चक्रि अत्र । अन्यमते - चक्रयत्र ।

आ + अ[40] = ब्रह्मा + ऋषिः = ब्रह्म ऋषिः ।

ई + इय्[41] > सुधी + औ = सुधियौ ।

ऊ + उव् > कटप्रू + औ = कटप्रुवौ ।

इयस्थले ईकारस्य इत्वम्, यकारागमश्च, उव्स्थले च ऊकारस्य उवतम्, वकारागमश्चाऽवगन्तव्यः ।

हिन्दद्यामपि - लड़की > लड़कियाँ इति रूपं दृश्यते ।

19. **आगमः ( Augment, Omtrision )** - द्वयोर्विषमध्वन्योमध्ये स्वरस्य, व्यञ्जनस्य वा आगमो भवति । गो शब्दाद् ह्रस्वे अकारे परतः 'गो' शब्दस्य 'अव्' (अवङ्) आदेशो विकल्पेन भवति । 'इन्द्र' शब्दे च परतः नित्यं 'गो' शब्दस्य अवादेशो भवति ।[42] यथा -

ओ + अ = अव् > गो + अग्रम् = गवाग्रम् ।

ओ + इ = अव् अ > गो + इन्द्रः > गव + इन्द्रः = गवेन्द्रः ।

व्यञ्जनरूपेण न-ध्-ङ्-त्-क्-ण् प्रभृतीनाम् आगमो भवति ।[43] यथा -

तस्मिन् + इति = तस्मिन्निति ।

सन् + अच्युतः = सन्नच्युतः ।

प्रत्यङ् + आत्मा = प्रत्यङ्ङात्मा ।

षट् + सन्तः = षट्त्सन्तः ।

सन् + सः = सन्त्सः ।

सन् + शम्भुः = सञ्च्छम्भुः, सञ्छम्भुः ।

प्राङ् + षष्ठः = प्राङ्क्षष्ठः ।

सुगण् + षष्ठः = सुगण्ट्षष्ठः ।

स्व + छाया = स्वच्छाया ।

चे + छिप्यते = चेच्छिप्यते ।

लक्ष्मी + छाया = लक्ष्मीच्छाया (पक्षे-लक्ष्मीछाया)

आ + छादयति = आच्छादयति इत्यादि ।

20. **लोपः**[४४] **( Elision )**- लोपाऽयमनेकविधः समस्वरलोपः, विषमस्वरलोपः, एकस्य व्यञ्जनस्य लोपः, अनेकव्यञ्जनानां लोपः, स्वरव्यञ्जनसमूहलोपः, समाक्षरलोपश्चेत्यादयः । पूर्वरूपः पररूपयोरुदाहरणेषु वस्तुतः पूर्ववर्तिनः परिवर्तिनो वा स्वरस्य लोपोऽस्ति । उदाहरणार्थम् -

अ + अ = अ > शक + अन्धुः = शकन्धुः ।

कर्क + अन्धुः = कर्कन्धुः ।

देवास + इह > देवा रू इह > देवाय् इह = देवा इह ।

अत्र विकल्पेन यलोपः । (पक्षे - देवायिह)

भोस् + देवाः > भो रू देवाः > भोय् देवाः = भो देवाः ।

देवास् + नम्याः > देवा रू नम्याः > देवाय् नम्याः = देवा नम्याः ।

पुनर् + रमते = पुना रमते । (एकस्य रेफस्य लोपः, पूर्वपदस्य दीर्घश्च)

21. **द्वित्वम्**[४५] **( Doubling )** - कस्यचन व्यञ्जनध्वनेः द्विवारमुच्चारणम् । यथा -

गौरी + औ = गौर्य्यौ ।

कर् + तव्यम् = कर्त्तव्यम् ।

कार् + यम् = कार्य्यम् इत्यादि ।

22. **प्रकृतिभावविधानम् ( Ceasure )**- कासुचिद् विशिष्टासु परिस्थितिषु सन्धि निषेधः । अनेन शब्दाः पदानि वा पूर्ववत् तिष्ठन्ति । यत्र स्थानेषु प्लुतसंज्ञा, प्रगृह्यसंज्ञा वा भवति । तत्र अचि परतः नित्यं प्रकृतिभावो भवतीति संस्कृतव्याकरणशास्त्रे नियमोऽस्ति ।[46] प्लुतस्योदाहरणम्, यथा - आगच्छ कृष्ण3 अत्र गौश्चरति ।

प्रगृह्य संज्ञाया विवेचनं निम्नाङ्कितमस्ति -

ईकारान्तं ऊकारान्तं एकारान्तं च द्विवचनान्तं शब्दरूपं (पदम्) प्रगृह्यसंज्ञं भवति ।[47] यथा -

हरी + एतौ = हरी एतौ । विष्णू + इमौ = विष्णू इमौ ।

अग्नी + इमौ = अग्नी इमौ । गंगे + अमू = गंगे अमू ।

साधू + एतौ = साधू एतौ । पचेते + इमौ = पचेते इमौ ।

अदस् सम्बन्धी मकारः पदान्तविधौ स्याच्चेत् ततोऽग्रे ईकार-ऊकारौ पगृह्यसंज्ञौ भवतः ।[48] यथा - अमी + ईशाः = अमी ईशाः ।

अमू + आसाते = अमू आसाते ।

'शे' इति छान्दस आदेशः । तस्मिन् परतोऽपि इकारः प्रगृह्य संज्ञो भवति ।[49] यथा –

अस्मे + इन्द्राबृहस्पती = अस्मे इन्द्राबृहस्पती ।

'आङ्' शब्दं वर्जयित्वा एकाच् निपातः प्रगृह्यसंज्ञा भवति ।[50] यथा –

इ + इन्द्रः = इ इन्द्रः । उ + उमेशः = उ उमेशः ।

ओदन्तो निपातः प्रगृह्यसंज्ञो भवति ।[51] यथा –

अहो + ईशाः = अहो ईशाः ।

अवैदिके 'इति' शब्दे परतः सम्बुद्धौ च य ओत् सः प्रगृह्य संज्ञो भवति शाकल्याचार्यमतेन[52] यथा –

विष्णो + इति = विष्णो इति । अन्यमते विष्णविति । विष्ण इति ।

एवं रूपेण संस्कृतभाषायाः सन्धयः भाषावैज्ञानिकदृष्ट्या प्रस्तोतुं शक्यन्ते । वस्तुतः एते पाणिनीयमते ध्वनिपरिवर्तनस्य नियमा अप्यवगन्तुं शक्यन्ते ।

**सन्दर्भाः**


1. डॉ. कपिलदेव द्विवेदी – भाषाविज्ञान एवं भाषाशास्त्र, पृष्ठ 286, विश्वविद्यालय प्रकाशन, वाराणसी, सन् 2008 ।
2. परः सन्निकर्षः संहिता । पाणिनी-अष्टाध्यायी 1/4/109 ।
3. द्रष्टव्यम् – भट्टोजिदीक्षित – वैयाकरणसिद्धान्तकौमुदी, सू. 2232, 'शेषेऽकखादावषान्त उपदेशे' (8/4/18)
4. पतञ्जलि – व्याकरणमहाभाष्यम् 1/1/आ.2 ।
5. आद्गुणः । पाणिनि – अष्टाध्यायी 6/1/87 ।
6. अदेङ्गुणः । तदेव 1/1/2 ।। उरण्परः । तदेव 1/1/51 ।
7. वृद्धिरादैच् । तदेव 1/1/1 । उरण्परः । तदेव 1/1/51 ।।
8. वृद्धिरेचि । तदेव 6/1/88 ।
9. एत्येधत्यूठ्सु । तदेव 6/1/89 ।
10. उपसर्गादृति धातौ । तदेव 6/1/91 ।
11. अकः सवर्णे दीर्घः । पाणिनि-अष्टाध्यायी 6/1/101 ।
12. इको यणचि । तदेव 6/1/87 ।
13. एचोऽयवायावः । तदेव 6/1/78 ।
14. वान्तो यि प्रत्यये । तदेव 6/1/79 ।

15. अतो रोरप्लुतादप्लुते । तदेव 6/1/113 । हशि च । तदेव 6/1/114 । वाह ऊठ् । तदेव 6/4/132 ।
16. इग्यण: सम्प्रसारणम् । पाणिनि-अष्टाध्यायी 1/1/45 । वचिस्वपियजादीनां किति । तदेव 6/1/15 । ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चति पृच्छति भृज्जतीनां ङिति च । तदेव 6/1/16 ।
17. खरवसानयोर्विसजीनय: । तदेव 8/3/15 । शर्परे विसर्जनीय: । तदेव 8/3/35 ।
18. खरि च । तदेव 8/4/55 ।
19. झलां जशोऽन्ते । तदेव 8/2/39 । झलां जश्झशि । तदेव । 8/1/53 ।
20. झलां जश् झशि ।। पाणिनि - अष्टाध्यायी 8/4/53 ।
21. एकाचो बशो भष् झषन्तस्य स्ध्वो: । तदेव 8/2/37 ।
22. यरोऽनुनासिकेऽनुनासिको वा । तदेव 8/4/45 । मोऽनुस्वार: । तदेव 8/3/23 ।। नश्चाऽपदान्तस्य झलि । तदेव 8/3/21 ।
23. स्तो: श्चुना श्चु: । पाणिनि - अष्टाध्यायी 8/4/40 ।
24. ष्टुना ष्टु: । तदेव 8/4/41 ।
25. उद: स्थास्तम्भो: पूर्वस्य । पाणिनि-अष्टाध्यायी 8/4/61 । झयो होऽन्यतरस्याम् । तदेव 8/4/62 ।
26. तोर्लि । तदेव 8/4/60 ।
27. अनुस्वारस्य ययि परसवर्ण: । तदेव 8/4/58 ।
28. वा पदान्तस्य । तदेव 8/4/59 ।
29. शश्छोऽटि । तदेव 8/4/34 ।
30. विसर्जनीयस्य स: । 8/3/34 ।
    इदुदुपधस्य चाऽप्रत्यय: । तदेव 8/3/41 ।
31. झलां जश् झशि । पाणिनि - अष्टाध्यायी 8/4/53 । खरि च । तदेव 8/4/55 ।
32. रषाभ्यां नो ण: समानपदे । तदेव 8/4/1 ।
33. अटकुप्वाङ्नुम्व्यवायेऽपि । तदेव 8/4/2 ।
34. इण्को: । तदेव 8/3/57 । आदेशप्रत्यययो: । तदेव 8/3/59 ।
35. कानाम्रेडिते । तदेव 8/3/12 । नश्छव्यप्रशान् । तदेव 8/3/7 ।
36. पुन: खय्यम्परे । पाणिनि - अष्टाध्यायी 8/3/6 ।
37. अमि पूर्व: । तदेव 6/1/107 । एङ: पदान्तादति । तदेव 6/1/109 । ङसिङसोश्च । तदेव 6/1/110 ।

38. एङि पररूपम् । तदेव 6/1/94 । ओमाङोश्च । तदेव 6/1/95 । अतोगुणे । तदेव 6/1/97 । अव्यक्तानुकरणस्यात इतौ । तदेव 6/1/98 ।
39. इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च । तदेव 6/1/127 ।
40. ऋत्यकः । तदेव 6/1/128 । ह्रस्वो विकल्पेनोक्तः ।......
41. अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । पाणिनि-अष्टाध्यायी 6/4/77 ।
42. अवङ् स्फोटायनस्य । तदेव 6/1/123 । इन्द्रे च । तदेव 6/1/124 ।
43. ङमोह्रस्वादचि ङमुण्नित्यम् । तदेव 8/3/32 । ङ सि धुट् । तदेव 8/3/29 । नश्च । तदेव 8/3/30 । शि तुक् । तदेव 8/3/31 । ङ्णोः कुक्टुक्शरि । तदेव 8/3/28 । छे च । तदेव 6/1/73 । दीर्घात् । तदेव 6/1/76 । पदान्ताद्वा । तदेव 6/1/77 । आङ्माङोश्च । तदेव 6/1/74।
44. शकन्ध्वादिषु पररूपं वाच्यम् । कात्यायन - वार्तिकम् 6/1/94 । संयोगान्तस्य लोपः । पाणिनि अष्टाध्यायी 8/2/23 । हलो यमां यमि लोपः । तदेव 8/4/64 । लोपः शाकल्यस्य । तदेव 8/3/19 । हलि सर्वेषाम् । तदेव 8/3/22 । रो रि । तदेव 8/3/14 ।
45. अचो रहाभ्यां द्वे । तदेव 8/4/46 ।
46. प्लुतप्रगृह्या अचि नित्यम् । पाणिनि - अष्टाध्यायी 6/1/125 ।
47. ईदूदेद्द्विवचनं प्रगृह्यम् । तदेव 1/1/11 ।
48. अदसो मात् । तदेव 1/1/12 ।
49. शे । तदेव 1/1/13 ।
50. निपात एकाजनाङ् । तदेव 1/1/14 ।
51. ओत् । तदेव 1/1/15 ।
52. सम्बुद्धौ शाकल्यस्येतावनार्षे । तदेव 1/1/16 ।

**आचार्यचरः केन्द्रीयसंस्कृतविश्वविद्यालयस्य**
**हिमाचलप्रदेशीयवेदव्यासपरिसरे,**
**तथा च शास्त्रचूडामणिः अध्येता**
**केन्द्रीयसंस्कृतविश्वविद्यालयस्य उत्तरप्रदेशीय-**
**लखनऊपरिसरस्य, लखनऊ ।**



# रप्रत्याहारविचारः

✍प्रो. बोधकुमारझाः

**(वैयाकरणजगति रप्रत्याहारविषये महती काचन शास्त्रीयविमर्शपरम्परा विलोक्यते । तत्र कैयटाचार्य्यानुरोधेन भट्टदीक्षितो रप्रत्याहारस्य समर्थकः, भट्टनागेशश्च महाभाष्यसन्दर्भानुगुणं विखण्डकः। प्रस्तुतनिबन्धे दीक्षितस्य हार्दं पकटीकृत्य नागेशस्य च मतं सम्यग्विविच्य एकादशयुक्तिभिः रप्रत्याहारस्य खण्डनं विहितम् । यच्च नूनं शास्त्ररसिकैरनुशीलनीयम् ।)**

**तत्त्वबिन्दवः** -

1. कौमुदीग्रन्थः ।
2. शेखरग्रन्थः ।
3. विवेच्यशब्दाः ।
4. कैयटाभिप्रेतो रप्रत्याहारः ।
5. कैयटानुरोधि दीक्षितमतम् ।
6. रप्रत्याहारस्य पञ्च खण्डनमण्डनानि ।
7. भाष्यसङ्गत्यनुरोधेन नागेशद्वारा रप्रत्याहारखण्डनम् ।
8. भाष्यकृतो द्वितीयहेतोः व्याख्यानम् ।
9. रप्रत्याहाराभावे तवल्कार इत्यादिप्रयोगोपपत्तिः ।
10. एकादशयुक्तिभिः रप्रत्याहारखण्डनम् ।
11. विशेषः - तृतीयहेतोर्व्यभिचारित्वनिरासः ।

1. **कौमुदीग्रन्थः** - एषामन्त्या इतः । लण्सूत्रेऽकारश्च ।

2. **शेखरग्रन्थः** - अकारश्चेति । तेन रप्रत्याहारसिद्धिः । अनन्त्यत्वात् पृथगुक्तिः । इदं 'तुल्यास्य..'[1] सूत्रस्थकैयटानुरोधेन ।

   परे त्वस्यानुनासिकत्वे 'अतो ल्रान्तस्य' इति सूत्रे पाणिनिर्लकारं नोच्चारयेत्, प्रत्याहारेणैव निर्वाहात् ।

   किञ्च, अस्येत्सञ्ज्ञकत्वे बहुषु यण्पदघटितसूत्रेष्वर्द्धमात्रालाघवानुरोधेन 'य' प्रत्याहारेणैव व्यवहरेत् ।

   किञ्च, अनुबन्धानामच्प्रत्याहारे ग्रहणाभावे 'आचारादप्रधानत्वाल्लोपश्च बलवत्तरः' इति भाष्योक्तस्य तृतीयहेतोरव्यापकत्वापत्तिः । तव लोपस्य बलवत्त्वेऽपि हल्प्रत्याहारसिद्धेः प्रागच्पदार्थनिष्पत्त्यभावेन 'उपदेशेऽजनुनासिक'[2] इत्यस्य वाक्यार्थाभावेन लणित्यकारस्येत्सञ्ज्ञालोपयोरभावेन प्रत्याहारेषु जातिग्रहणपक्षस्यैव भाष्यकृता सिद्धान्तित्वेन हल्प्रत्याहारे लणित्यकारप्रवेशे 'मामाँस्त्रायस्व' इत्यत्रानुनासिकपक्षेऽनुस्वारापत्तिर्दुर्वारा, 'सोऽस्ति' इत्यादौ सुलोपाद्याप-

त्तिश्च । अतएव – 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न' इत्यनेन प्रत्याहारे वर्णसमाम्नाये य एतेऽक्षु अज्बोधकसूत्रेषु प्रत्याहारार्था अनुबन्धाः क्रियन्ते, तेषामज्ग्रहणेन ग्रहणं कस्मान्नेत्यर्थकेनाच्प्रत्याहारे शङ्का कृता, न हल्प्रत्याहारे। भाष्य च 'अइउण्' इत्यादिसूत्रचतुष्टयोपादानेनैवास्य प्रवृत्तिर्दर्शिता । तत्र प्राधान्यं प्रत्याहारेषु ग्रहणार्थत्वरूपम्, हल्षु च तथोपदेशस्तेषाम्, अक्षु तु स्वराणामव तथोपदेश इति प्राधान्यात् तेषामेव सञ्ज्ञित्वमिति भाष्ये स्पष्टम् । न च हशादिप्रत्याहारे टग्रहणस्यापत्तिरिति वाच्यम्, हकारादिषु पुनः पुनरकारोच्चारणेन उच्चारणार्थवर्णरहितहलां तद्घटित-प्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात्, तद्विषयप्रयोगाणामनभिधानाच्च ।

तस्मादस्यानुनासिकत्वमप्रामाणिकम् । 'उरण् रपरः'[3] इत्यत्र लग्रहणं कर्त्तव्यमेव । ऋलृवर्णयोः सावर्ण्य-वदित्याहुः ।

3. **विवेच्यशब्दाः** – आचारात् = 'अनुनासिक' इत्यादौ ककारे परस्मिन् सति यणोऽकरणरूपात् आचार्य्यस्य पाणिनेर्व्यवहारात् । अव्यापकता = अल्पदेशवृत्तित्वरूपा । व्याप्यता । पक्षैकदेशे अविद्यमानत्वरूपा । कथमज्ग्रहणेषु न = अच्सञ्ज्ञाग्राह्येषु अकारादिषु कस्मान्न (अनुबन्धानां) ग्रहणम् । प्रत्याहारेषु = प्रत्या-हारग्राह्येषु । हल्षु = हल्प्रत्याहारबोध्येषु । अक्षु = अच्प्रत्याहारबोध्यषु । सञ्ज्ञित्वम् = अजादिवाच्यत्वम्। अनुबन्धत्वम् = इत्सञ्ज्ञायोग्यत्वम् (नागेशमते), इत्सञ्ज्ञकत्वम् (प्राचीनमते) ।
4. **कैयटाभिप्रेतो रप्रत्याहारः** – 'ऋलृवर्णयोः सावर्ण्यं वाच्यमि'ति वार्त्तिकसहकारेण 'तवल्कारः' इत्यादौ 'उरण् रपरः' इति सूत्रेण रपरत्वं स्यादिति शङ्कां समाधातुं भाष्यवार्त्तिककारो 'लृकारस्य लपरत्वं वक्ष्यामि' इति 'तुल्यास्य...' सूत्रभाष्ये प्रावोचत् । कैयटस्तु तदुक्तभाष्यवार्त्तिकस्य क्वाप्यदर्शनात् 'रप्रत्या-हाररूपेण व्याख्यास्यामि' इत्यर्थमकरोत् । व्याख्या च लण्सूत्रीयाकारानुनासिकत्वप्रतिज्ञया रप्रत्याहारसिद्धि-रूपा । एतेनेदं सिद्ध्यति – रप्रत्याहारः कैयटाभिप्रेतः इति ।
5. **कैयटानुरोधि दीक्षितमतम्** – रप्रत्याहारसिद्धये दीक्षित आह – 'लण्सूत्रेऽकारश्च' इति । तथा हि लण्सूत्रस्थे अकारे अनुनासिकत्वं प्रतिज्ञाय 'उपदेशेऽजनु.....' इति इत्सञ्ज्ञायाम्, 'आदिरन्त्येन सहेता' इति सूत्रेण (अन्त्येन इता = लघटकेन इत्सञ्ज्ञकसदृशेन अकारेण सह उच्चार्य्यमाणः आदिः = आदिसदृशः रेफः, सः = तयोः रेफस्य, अकारस्य च यः समुदायः 'र' इति, आदिवर्णस्य रेफस्य, मध्यगवर्णस्य लकारस्य च बोधकः) 'हयवरट्' इति रेफमारभ्य लण्सूत्रस्थमकारं यावत् रप्रत्याहारः सिद्ध्यति । अस्मिन् र् ल् इति द्वौ वर्णौ भवतः । फलतः 'कृष्णर्द्धिः' इत्यत्र रपरत्वम्, 'तवल्कारः' इत्यत्र लपरत्वञ्च जायते।
6. **रप्रत्याहारस्य पञ्च खण्डनमण्डनानि** –

   **प्रथमखण्डनम्** – यदि लण्सूत्रघटकेऽकारे अनुनासिकत्वं स्यात् तदा 'अतो ल्रान्तस्य'[4] (लकारान्तस्य, रेफान्तस्य चाङ्गस्य अन्तस्यातो वृद्धिर्भवति परस्मैपदे सिचि । क्षरसञ्चलने अक्षारीत् । ज्वलदीप्तौ,

अज्वालीत् ।) इत्यत्र रप्रत्याहारबोधकरशब्दोपादानेन रलयोर्बोधसम्भवात् पृथग्लकारोपादानं किमर्थं सूत्र कृतम् ? तत्सामर्थ्यात् निश्चीयते – नानुनासिकत्वेन लण्सूत्रेऽकारः इत्सञ्ज्ञकः इति । अतो रप्रत्याहारा-भावात् रलयोरुपादानं सूत्रे सार्थकम् ।

**मण्डनम्** – लकारोच्चारणेन रप्रत्याहारोऽनित्यः इति ज्ञाप्यते । अतः 'कमलानाम्' इत्यत्र 'रषाभ्यां नो णः' इति न णत्वम्, अपि च 'प्रफुल्तः' ('अनुपसर्गात् फुल्ल-क्षीब-कृशोल्लाघाः'[5] इति सूत्रेण त्रिफलाविशरणे धातोः क्तप्रत्यये फुल्ल इति निपात्यते। उपसर्गात्तु – प्रफुल्तः इति रूपम्) इत्यत्र लकारात्परस्य निष्ठातकारस्य 'रदाभ्यां निष्ठातः....'[6] इति न नत्वम् । अतो रप्रत्याहारस्यानित्यत्वं ज्ञापयितुं लकारग्रहणं सार्थकमेव ।

**पुनः खण्डनम्** – वैयाकरणानां मते शब्दस्य नित्यतया रपदस्याऽनित्यत्वं दुरुपपादम् । न च रपदनिष्ठा रेफलकारोभयनिरूपिता शक्तिरनित्येति वाच्यम्, 'सिद्धे शब्दार्थसम्बन्धे' इति शक्त्याख्यस्य शब्दार्थयोः सम्बन्धस्याऽपि नित्यत्वात् । न च रपदं सर्वत्र र् ल् तात्पर्य्येण पाणिनिना नोच्चरितमिति पाणिनि-तात्पर्य्यस्यैवानित्यत्वं तेन कल्प्यते इति वाच्यम्, व्याख्यानादिनैव तात्पर्य्याऽनित्यत्वस्य निर्णयसम्भवात्, स्वतात्पर्य्यस्यानित्यत्वबोधनाय पाणिनेर्लकाराच्चारणरूपोपायन्तरस्यानपेक्षणाच्च (अन्यथा 'इणो यणि' त्या-दावपि इण्प्रत्याहारे, यण्प्रत्याहारे च मे तात्पर्य्यं नास्ति, 'इको यणची'त्यादौ च मम तत्र तात्पर्य्यमस्तीति बोधनायापि उपायान्तरस्य करणीयत्वं स्यात्)। श्रीबालशास्त्रिचरणास्तु 'रषाभ्यां', 'रहाभ्यामि' त्यादौ रेफो-त्तराकारस्यानुनासिकत्वाभावादेव (अनुनासिकत्वे प्रतिज्ञाया अभावादेव) न प्रत्याहार इत्यस्य वक्तुं शक्यतया रप्रत्याहाराऽनित्यत्वे फलाभावात्, 'अतो ले' त्यत्र लकारोच्चारणवैयर्थ्यरूपो दोषो रप्रत्याहारस्वीकारे वज्रलेपायमान एवेति । एवमेव 'वनो र च', 'रात्सस्य' इत्यादावपि प्रतिज्ञाऽभावादेव रप्रत्याहाराऽप्राप्तिः बोध्या । किञ्च, वृद्ध्यादिसञ्ज्ञाया व्याकरणशास्त्रे क्वचिदप्यनित्यत्वादर्शनेन रप्रत्याहारस्याऽनित्यत्वकल्पन-स्याऽयुक्तत्वात् ।

**द्वितीयं खण्डनम्** – लण्सूत्रेऽकारस्येत्सञ्ज्ञकत्वे बहुषु यण्पदघटितसूत्रेषु ('इको यणचि'[7], 'संयोगादेरातो धातोर्यण्वतः'[8] इत्यादिषु लाघवसम्भवस्तेष्वेव, न तु सर्वत्र । तथा सति 'यणो मयो द्वे वाच्ये' इत्यादौ पञ्चम्यन्तषष्ठ्यन्त याद् – यस्येत्युभयकरणे गौरवात्) 'इको यणचि' इत्यादिषु प्रत्येकमर्द्धमात्रालाघवानु-रोधेन यप्रत्याहारेणैव पाणिनिर्व्यवहरेत्, किन्तु पाणिनिना तथा न व्यवहृतम् । एतेनेदं सिद्ध्यति – लण्सूत्रस्थाकारो नेत्सञ्ज्ञकः । तथा च न रप्रत्याहार इति ।

**मण्डनम्** – लण्सूत्रस्थाऽकारस्यानुनासिकत्वेऽपि केवलो रप्रत्याहार एव सिद्ध्यति, न यप्रत्याहारोऽपि । कुतः? इत्युक्ते यप्रत्याहारे सति 'योऽचि'[9] (अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया । मया ।),

'यस्य हलः'[10] (हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके । सोसूचांचक्रे ।), 'यस्येति च'[11] (भस्ये-वर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे ।) इत्यादिषु यप्रत्याहारो यवर्णो वेति निर्णेतुं व्याख्यानाश्रयण-रूपगौरवात् । अतो णकारोच्चारणम् अकारेण सह रप्रत्याहार एव भवति, न यणादिरिति ज्ञापनार्थम्, तेन 'ङेर्यः' इत्यादौ न प्रत्याहारग्रहणम् । अतो रप्रत्याहाराश्रयणे न किञ्चिद् बाधकमिति । किञ्च, 'पर्य्याय-शब्दानां लाघवगौरवचर्चा नाद्रियत' इति परिभाषानुसारेण यण्य इत्युभयोः लाघवगौरवचर्चाऽनादरात् शेख-रोक्तस्यायुक्तत्वमिति ।

**पुनः खण्डनम्** - अनेकत्र र-य घटितसूत्रेषु प्रत्याहारग्रहणाभावाय अनेकक्लिष्टकल्पनापेक्षया रप्रत्याहारस्वीकाराभावे एव लाघवात्, रप्रत्याहारस्य 'उरण् रपरः' इत्येकत्रैव फलसत्त्वेन 'न ह्येकमुदाहरणं सामान्ययोगारम्भं प्रयोजयति' इति भाष्यविरोधाच्च रप्रत्याहारो नाश्रयणीय एव । अथ च पर्य्यायशब्दाना-मिति न्यायस्य गृहीतशक्तिकपदविषयकत्वेन प्रकृतेऽणादिपदशक्तिग्राहक 'आदिरन्त्येन' इति शास्त्रबोधित-सङ्केततावच्छेदकत्वं यण्त्वमपेक्ष्य लाघवाद्यत्व एव पाणिनिना कुतो न स्वीकृतमिति शङ्कायाः सम्भवात् न शेखरग्रन्थस्यायुक्तत्वमिति ।

**तृतीयं खण्डनम्** - उक्तञ्च भाष्ये 'हयवरट्' सूत्रे -

**प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।**
**आचारादप्रधानत्वाल्लोपश्च बलवत्तरः॥** इति ।

**श्लोकवार्त्तिकस्यायं भावः** - भाष्यकृता अच्प्रत्याहारे णकाराद्यनुबन्धानामग्रहणे अनुमानप्रक्रियया त्रयो हेतवः उक्ताः । (1) **आचारात्** = आचार्य्यस्य 'अनुनासिकः' इत्यादौ ककारे परे यणः अकरणरूपाद् व्यवहारात् । (2) **अप्रधानत्वात्** = अज्बोधकसूत्रेषु 'अइउण्' इत्यादिषु अचामेव पाठस्य प्राधान्यात् अचामेव ग्रहणम् । तत्र णकारककाराद्यनुबन्धानां पाठस्य अप्राधान्यात् न ग्रहणम्, 'प्रधानाऽप्रधानयोः प्रधाने कार्य्यसम्प्रत्ययः' इति न्यायात् । अनुबन्धानामप्राधान्यञ्च 'आदिरन्त्येन' इति सूत्रे 'अन्त्येन' इति पदे अप्रधानेऽर्थे कृतया तृतीयया बोध्यते । (3) **लोपश्च बलवत्तरः** = 'तस्य लोपः' इति शास्त्रस्य बलव-त्त्वात् = अन्तरङ्गत्वात् (पूर्वं वर्णोपदेशः, तदुत्तरमित्सञ्ज्ञा, तदुत्तरमादिरन्त्येनेति प्रत्याहारः इति नियमात्) प्रत्याहारसिद्धेः प्रागेव णकाराद्यनुबन्धानां लोपे न 'अच्' प्रत्याहारे अनुबन्धानां ग्रहणमिति । एतदुक्तं भाष्यं मनसि निधाय नागेशः आह - (यदि लण्सूत्रघटकाकारः इत्सञ्ज्ञकः स्यात् तर्हि) तृतीयहेतो-रव्यापकत्वापत्तिरिति । अर्थात् 'लोपश्च बलवत्तरः' इति हेतुः पक्षतावच्छेदकस्य अव्यापकः स्यादतो न लकाराकारः अनुनासिकः।

तथा हि - हल्प्रत्याहारसिद्धेः पूर्वं चकारस्य इत्सञ्ज्ञाया अभावेन अच्प्रत्याहारस्य अनिष्पत्त्या लण्सूत्रघटकाकारे 'उपदेशेऽज्.....'[12] इति सूत्राऽप्रवृत्त्या इत्सञ्ज्ञाया अभावेन लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वाभावेन तृतीयहेतोरगमनात् भागासिद्धिरूपो दाषः । तस्माद् भाष्योक्ते तृतीयहेतौ भागासिद्धिदोषपरिहाराय लण्सूत्रघटकाकारो नानुनासिकः । अत एव नेत्सञ्ज्ञकोऽपि इति । अत्रानुमानञ्च - पक्षतावच्छेदकावच्छेदेन कृतम् । तथा च - अनुबन्धाः (पक्षः), प्रत्याहारजन्यबोधविषयत्वाभाववन्तः (साध्यम्), लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात् (हेतुः), यन्नैवं तन्नैवं यथा अइउण्घटकोऽकारः (उदाहरणम्), नेमे तथा (उपनयः), तस्मादनुबन्धाः प्रत्याहारजन्यबोध्यविषयत्वाभाववन्तः (निगमनम्) इति पञ्चावयवानुमानवाक्यानि ।

**विवरणम्** - अनुबन्धाः = इत्सञ्ज्ञायोग्याः । 'प्रत्याहारजन्य...'= प्रत्याहारेण अजादिपदेन जायमानो यो बोधः तद्विषयत्वाभाववन्तः = तद्विषयतायाः अनाश्रयाः । 'लोपशास्त्रीयो....'= लोपशास्त्रं तस्य लोपः, तदीयोद्देश्यम् = इत्सञ्ज्ञकम्, तदीयोद्देश्यता इत्सञ्ज्ञके इत्सञ्ज्ञावति वर्णे, तदवच्छेदकम् = वर्णस्य विशेषणम् इत्सञ्ज्ञावान् इति, तदवच्छेदकत्वम् = इत्सञ्ज्ञावत्त्वम् अर्थात् इत्सञ्ज्ञकत्वम्, तेन आक्रान्तत्वात् = युक्तत्वात् ।

अस्तु । अस्यामनुमितौ लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वरूपहेतोः अनुबन्धरूप प्रत्येकस्मिन् पक्षे स्थितिः अपेक्षिता, तदैव स हेतुः पक्षतावच्छेदकस्य व्यापको भवितुमर्हति । लण्सूत्राकारे अनुनासिकत्वे स्वीकृते इत्सञ्ज्ञायोग्यत्वरूपस्य अनबन्धत्वस्य तस्मिन् स्थितेऽपि लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वरूपहेतोः अर्थात् इत्सञ्ज्ञकत्वस्य तस्मिन् न स्थितिः । तस्मादव्यापकत्वापत्तिरूपो दोषोऽवसेयः । नागेशमते तु लण्सूत्राकारः अनुनासिक एव नास्ति, अतः स नानुबन्धः (पक्षः) । तस्माद् हेतोः तत्राऽगमनेऽपि दोषाभावः ।

न च हेतोः (लोपस्य) साध्यापेक्षया (प्रत्याहारे ग्रहणाभावापेक्षया) अव्यापकत्वं न दोषावहम् । यथा 'पर्वतो वह्निमान्, धूमात्' इत्यत्र वह्निमति अयःपिण्डे वह्निरूपस्य साध्यस्य सत्त्वेऽपि धूमरूपो हेतुर्नास्ति, तथापि न किञ्चिद् दूषणम्, तत्र धूमहेतुका अनुमितिर्जायते एवेति वाच्यम्, अव्यापकस्य कथनं नात्र साध्यापेक्षया कृतम्, किन्तु पक्षतावच्छेदकापेक्षया । अर्थात् सर्वस्मिन् पक्षे अनुमितिश्चेदिष्टा, तदा पक्षतावच्छेदकदृष्ट्या हेतोः व्यापकत्वम् (सकलपक्षवृत्तित्वम्) अपेक्षितम् । एवं हि यदि कस्मिंश्चित्पक्ष हेतुर्न वर्त्तते, तदा पक्षस्य भागे असिद्ध्या भागासिद्धिदोषेण ग्रस्तो हेतुर्नानुमितिं जनयतीति भावः ।

**अत्रेदं बोध्यम्** - अनुमितिर्द्विधा - पक्षतावच्छेदकावच्छेदेन (सकलपक्षे), पक्षतावच्छेदकसामानाधिकरण्येन (यत्किञ्चिद् विवक्षिते पक्षे) च । तत्र पक्षतावच्छेदकावच्छेदेन अनुमितौ पक्षतावच्छेदकावच्छिन्ने सकले

पक्षे हेतोः वृत्तित्वम् (विद्यमानत्वम्) अनिवार्य्यम् । यथा पर्वतत्वावच्छेदेन सकलपर्वते वह्नौ साध्ये सकलपर्वतेषु हेतुभूतधूमस्य वृत्तित्वमावश्यकम् । तथा चायं धूमः पक्षतावच्छेदकपर्वतत्वस्य व्यापकः । यद्येकस्मिन्नपि पर्वते धूमस्य वृत्तित्वं न स्यात् तदा धूमे पक्षतावच्छेदकम्प्रति व्यापकत्वं न तिष्ठति । एतादृशेन अव्यापकहेतुना पर्वतत्वावच्छेदेन अनुमितिः न भवति । पक्षतावच्छेदकसामानाधिकरण्येन अनुमितौ यस्मिन् अधिकरणे अनुमितिः कर्त्तव्या, तस्मिन् अधिकरणे एव हेतोः वृत्तित्वम् अपेक्षितं भवति, न तु सकले पक्षे ।

**मण्डनम्** - भाष्यस्य 'अक्षु य एते प्रत्याहारार्था अनुबन्धाः क्रियन्ते' इति कथनानुरोधेन केवलम् अनुबन्धत्वम् न पक्षतावच्छेदकम्, किन्तु अज्बोधकसूत्रस्थानुबन्धत्वम् एव पक्षतावच्छेदकम् । अस्यां स्थितौ लण्सूत्राकारः पक्ष एव नास्ति । तस्मात् तृतीयहेतोरव्यापकत्वापत्तेः प्रश्नाभावः ।

**खण्डनम्** - हलादिप्रत्याहारेऽपि - सूत्रान्तरस्थानुबन्धेऽपि दोषसद्भावात् अनुबन्धस्यैव पक्षतावच्छेदकत्वमुचितम् । तथा च 'अज्ग्रहणेषु' इत्युपलक्षणम् । अन्यथा अड्ग्रहणे चकारस्यापि ग्रहणात् सूचीनामित्यत्राड्व्यवाय इति णत्वम्, इण्ग्रहणेन चकारग्रहणात् 'रुचिध्वे' इत्यादौ 'विभाषेटः'[13] इति वा ढः स्यात् । एवञ्च प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न इति वार्त्तिके अज्ग्रहणेष्वित्युक्तिस्तु व्यापकत्वात्, प्रथमोपस्थिताकारत्यागाभावसूचनार्थत्वात्, लोपशास्त्रप्रसिद्धत्वाच्च बोध्या ।

**पुनः मण्डनम्** - नन्वनुबन्धत्वं नेत्सञ्ज्ञायोग्यत्वमपितु इत्सञ्ज्ञकत्वमेव । तच्च हल्प्रत्याहारसिद्धिकाले तत्र नास्तीति हेतोः पक्षतावच्छदकस्य च तत्राभावान्नाव्यापकत्वशङ्केति ।

**पुनः खण्डनम्** - तावताऽव्यापकत्वाभावेनानुमानस्यादुष्टत्वेऽपि हल्प्रत्याहारे मध्यगत्वेन ग्रहणापत्तेर्दुर्वारत्वात् । नागेशमते तु 'हयवरे'त्यादौ हकाराकारादेरिव तस्याप्युच्चारणार्थत्वेन मध्यगत्वेन ग्रहणापत्त्यभावः ।

**पुनः मण्डनम्** - ननु नागेशनयेऽपि उच्चारणार्थानामपि इत्सञ्ज्ञालोपाभ्यां निवृत्तिरिति लण्सूत्राकारे अनुबन्धत्वमावश्यकमिति अव्यापकत्वापत्तिरेतन्मतेऽपीति ।

**पुनः खण्डनम्** - विधेयविषये एव उच्चारणार्थानामित्सञ्ज्ञालोपाभ्यां निवृत्तिस्वीकारः, यथा अनङादौ । तत्र प्रयोगसमवायित्वभिया इत्सञ्ज्ञालोपयोरावश्यकत्वम् । प्रकृते चेत्सञ्ज्ञालोपयोरनावश्यकत्वम् ।

**चतुर्थ खण्डनम्** - हल्प्रत्याहारसिद्धेः प्राक् अच्पदार्थनिष्पत्त्यभावेन 'उपदेशेऽज्...' इत्यस्य वाक्यार्थाभावेन लणित्यकारस्य इत्सञ्ज्ञालोपयोरभावेन हल्त्वं स्यात् । स्याच्च तदा 'अन्प्राणने' इति धातोः क्विपि, 'अनुनासिकस्य क्विझलोः क्ङिति'[14] इत्युपधादीर्घे, सम्बोधने 'न ङिसम्बुद्ध्योः'[15] इति नलोपाभावे 'हे आन् ! मां त्रायस्व' इत्यर्थे 'माम् + आंस्त्रायस्व' (अथवा आँस्त्रायस्व) इति स्थितौ आकारस्य हल्त्वात्

'मोऽनुस्वारः' इति मामित्यस्य मकारस्य हलि परेऽनुस्वारापत्तिः । **मण्डनम्** - व्यक्तिपक्षे लण्सूत्रस्थाकारस्य लक्ष्यस्थात् आकाराद् भिन्नत्वात् हल्त्वाभावात् दोषाभावः ।

**खण्डनम्** - 'अणुदित्....'[16] सूत्रे अण्ग्रहणं प्रत्याख्यातुं भाष्यकृता जातिपक्षस्यैव सिद्धान्तितत्वात् लण्सूत्रस्थेन अकारेण लक्ष्यस्थाकारस्यापि ग्रहणात् दोषो भवत्येव ।

**पुनर्मण्डनम्** - लणित्यत्र ह्रस्वोऽकारः । तस्मात् ह्रस्वत्वसमानाधिकरण अत्वजात्याश्रयः अकारः अर्थात् ह्रस्वाऽकारः एव हल्प्रत्याहारे गृहीतः स्यात् । उपर्युक्तो लक्ष्यस्थः आकारस्तु दीर्घः । तस्मान्न दोष इति ।

**पुनः खण्डनम्** - एवमपि अन्धातोर्विचि अन् इति जाते 'माम् + अंस्त्रायस्वे'ति प्रयोगे दोषो दुरुद्धरः ।

**पञ्चमं खण्डनम्** - हल्प्रत्याहारे ह्रस्वत्वसमानाधिकरणात्वजात्याश्रयस्य अकारस्य ग्रहणेऽपि 'सोऽस्ति' इति प्रयोगे अकारं हलं मत्वा एतत्तदोरिति सुलोपापत्तिः । अतो लण्सूत्राऽकारो नानुनासिक इति स्वी–कर्त्तव्यः इति । अत्र ध्येयम् - जातिनिर्देशो हि द्विविधः । अनुनासिकत्वसमानाधिकरणजातिनिर्देशः, ह्रस्वत्वसमानाधिकरणजातिनिर्देशो वा । आद्ये - मामाँस्त्रायस्वेत्यत्र, अन्त्ये सोऽस्तीत्यत्र च दोषः ।

7. **भाष्यसङ्गत्यनुरोधेन नागेशद्वारा रप्रत्याहारखण्डनम्** - लण्सूत्रघटकोऽकारो नेत्सञ्ज्ञको भवति, अत एव भाष्यकारेण प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न इति भाष्यवार्त्तिकेन अच्प्रत्याहारे एव शङ्का कृता, न तु हल्प्रत्याहारे । भवन्मते तु हल्प्रत्याहारे एव शङ्का करणीया, यतः सर्वेषां प्रत्याहाराणां मूलभूतो हल्प्रत्याहार एवास्ति । भाष्ये च अइउणित्यादिसूत्रचतुष्टये एव प्रवृत्तिर्दर्शिता। यदि च लणकारः अनुनासिकः स्यात् तर्हि भाष्यकृतः उक्तशङ्कायाः असङ्गतिः स्यात् ।

8. **भाष्यकृतो द्वितीयहेतोः व्याख्यानम्** - प्रत्याहारेऽनुबन्धानामग्रहणे भाष्यकृतः त्रयो हेतवः उक्ताः - आचारात्, अप्रधानत्वात्, लोपश्च बलवत्तर इति । अत्र द्वितीयो हेतुः 'अप्रधानत्वादि'ति । प्रधानत्वञ्चात्र प्रत्याहारेषु ग्रहणार्थत्वम् । तथाहि - हल्षु व्यञ्जनवर्णोपदेशो ग्रहणार्थः, अक्षु च स्वरवर्णोपदेशो ग्रहणार्थः। तस्मात् ग्रहणार्थत्वरूपप्राधान्यात् हल्प्रत्याहारस्य सञ्ज्ञी व्यञ्जनवर्ण एव, अच्प्रत्याहारस्य सञ्ज्ञी स्वरवर्ण एवेति भाष्ये स्पष्टम् ।

**अत्राऽऽशङ्कते** - हल्षु हलां प्राधान्यात् हशादिप्रत्याहारे टकारादीनामपि मध्यपतितत्वात् हशादि–प्रत्याहारबोध्यत्वाऽऽपत्तिरिति ।

**समाधत्ते** - 'हयवरे' त्यादिप्रत्यक्षरं वारं वारमकारोच्चारणसामर्थ्यात् उच्चारणार्थकवर्णरहितहलां हल्घटित–प्रत्याहारे बोधो नेति ज्ञापनात् दोषनिवृत्तिः । अथवा टकारं हश्प्रत्याहारान्तर्गतं मत्वा उत्वघटितप्रयोगस्य रामो टीकते को यष्टिको टीकते इत्यादेः अनभिधानात् न हशादिप्रत्याहारे टकारादिग्रहणाऽऽपत्तिरिति ।

9. **रप्रत्याहाराभावे तवल्कार इत्यादिप्रयोगोपपत्तिः** – नागेशमते लण्मध्यस्थोऽकारो नानुनासिकः, प्रमाणाभावात् । अतो न तेन अनित्संज्ञकेन अकारेण रप्रत्याहारसिद्धिः । 'तवल्कारः' इत्यादौ लपरत्वसिद्धये 'उरण् रपरः' इति सूत्रे लकारग्रहणं कर्त्तव्यम् । तेन च 'उरण् रपरो लपरश्च' इति सूत्रस्वरूपम्, अथवा 'उरण् रलपरः', अथवा 'उरण् लपरः', 'उरण् रल्परः' इति वा सूत्रस्वरूपं स्यात् । यथा ऋकारस्य लृकारस्य च स्थानिभेदात् सवर्णसञ्ज्ञा सूत्रानुसारेण अप्राप्ता 'ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्' इति वार्त्तिकेन कृता, तद्वदेव वाचनिकं लपरत्वं कर्त्तव्यमेव, न तु रप्रत्याहारसाधनद्वारा व्याख्यातव्यमिति ।

10. **एकादशयुक्तिभिः रप्रत्याहारखण्डनम्** –

1. लण्सूत्रस्थाकारस्य अनुनासिकत्वाभावेन इत्सञ्ज्ञकत्वाभावः, अनुनासिकत्वस्य प्रतिज्ञागम्यत्वेनात्राकारे पाणिन्यादिप्रतिज्ञाया अभावात् ।
2. 'लृकारस्य लपरत्वं वक्ष्यामि' इति भाष्यमेव लण्सूत्रस्याकारस्यानुनासिकत्वे मानम् । अत एव 'रपरः' इत्यत्र 'र' इति लण्सूत्रस्थाकारेण प्रत्याहारः इति कैयटोक्तिरपि सङ्गच्छते । भाष्ये 'वक्ष्यामि' इत्यस्य 'रप्रत्याहाररूपेण व्याख्यास्यामी' त्यर्थादिति वाच्यम्, 'वक्ष्यामि' इत्यस्य 'लपरश्च इति कथयिष्यामि' इति वार्त्तिककरणे एव तात्पर्य्यात् । व्याख्यानतात्पर्य्येण व्याख्यातेरेव (वि आङ् पूर्वकख्याधातोरेव) प्रयोगस्य भाष्यशैलीसिद्धत्वात् । वच्धातोर्वचनरूपेण करणे एव प्रयोगाच्च । तथा हि 'वक्ष्यामि' इत्युत्तरात् 'रप्रत्याहाररूपेण व्याख्यास्यामी' त्यर्थस्यानुचितत्वम् ।
3. भाष्ये 'लृकारस्य लपरत्वं वक्ष्यामि' । तच्चावश्यं वक्तव्यम् । असत्यां सवर्णसञ्ज्ञायां विध्यर्थम् इति तुल्यास्यसूत्रे उक्तम् । अत्र रप्रत्याहाररूपव्याख्यालभ्यत्वे तच्च ('लपरश्च' इति वार्त्तिकं) विध्यर्थं वक्तव्यमिति अनुपपन्नमेव स्यात्, अपूर्वस्यैव विधानात् ।
4. किञ्च ऋकारग्रहणेन लृकारग्रहणे 'ऋवर्णान्नस्य णत्वम्' इत्यनेन यथा 'क्लृप्यमानम्' इत्यत्र णत्वमापाद्य परिहृतम्, तथा रप्रत्याहारसत्त्वे' रषाभ्यां नो णः' इत्यादिना 'फलानाम्' इत्यादिषु णत्वाद्यापाद्य भाष्ये परिहाराकरणेन रप्रत्याहाराभाव एव निश्चीयते ।
5. किञ्च रप्रत्याहारस्य 'उरण् रपरः' इत्येकत्रैव फलसत्त्वेन 'न ह्येकमुदाहरणं सामान्ययोगारम्भं प्रयोजयति' इति भाष्यविरोधोऽपि स्यात् ।
6. 'रल्परः' इति न्यासेनैव सिद्धे गुरुभूतप्रत्याहारसाधनस्य वैफल्यम् ।
7. रप्रत्याहाराभावादेव 'अतो ल्रान्तस्य' इति सूत्रभाष्ये रप्रत्याहारेणैव रलयोर्ग्रहणसिद्ध्या लकारवैयर्थ्यापत्तिविषये शङ्का न कृता ।

8. किञ्चानेकत्र र-य घटितसूत्रेषु प्रत्याहारग्रहणाभावाय अनेकक्लिष्टकल्पनापेक्षया रप्रत्याहारस्वीकाराभावे एव लाघवम् ।
9. वृद्ध्यादिसञ्ज्ञाया व्याकरणशास्त्रे क्वचिदप्यनित्यत्वादर्शनेन रप्रत्याहारस्यानित्यत्वकल्पनमयुक्तम् ।
10. अनुबन्धानामज्ग्रहणेन = अजादिप्रत्याहारेण ग्रहणं कुतो न भवतीत्येवं शङ्का भाष्यकृता अच् प्रत्याहारे एव कृता, न तु हल्प्रत्याहारे । यदि लण्सूत्रस्थावर्णः अनुनासिकः स्यात्, तथा चेत् सञ्ज्ञकः स्यात्, तर्हि तत्रापि शङ्का कर्त्तव्या । सा न कृता । तस्मान्न अकारोऽनुनासिकः ।
11. वस्तुतस्तु 'अइउणि' त्यादिसूत्राणामन्त्यवर्णा महेश्वरेण योजिताः, शेषास्तु श्रुतिरूपतया स्वतः सिद्धाः। एवञ्च हकारादिष्वकाराणां शुद्धत्वम्, लकाराऽकारस्यानुनासिकत्वमिति वैषम्ये बीजाभावः । तथा च तस्येत्त्वाभावेन रप्रत्याहारो नोचितः ।

11. **विशेषः ( तृतीयहेतोर्व्यभिचारित्वनिरासः )** - न च 'अइउण्', 'ऋलृक्' इत्यादौ णकारककारादीनामित्सञ्ज्ञाविधानाय हल्प्रत्याहारजन्यबोधविषयत्वस्य दृष्टतया साध्यस्य = बोधविषयत्वाभावस्य अभावात्, हेतोः = इत्सञ्ज्ञकत्वस्य च सत्त्वात् साध्याभाववति = तादृशणकारककारादौ हेतोः = इत्सञ्ज्ञकत्वस्य वृत्तित्वेन लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात् (इत्सञ्ज्ञकत्वात्) हेतुर्व्यभिचारीति नानुमितिः स्यादिति वाच्यम्, स्वेतरो यः स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्तदबोधकप्रत्याहारजन्यबोधविषयत्वाभावस्य साध्यत्वेनाऽदोषात् । समन्वयस्तु - स्वम् = 'अइउण्' इत्यादिघटको णकारककारादिः तद्भिन्नो यः, स्वम् = 'अइउण्' इत्यादिघटको णकारककारादिः तन्निष्ठं श्रावणप्रत्यक्षमर्थात् श्रोत्रेन्द्रियेण जायमानं ज्ञानम् = णकारककारादिज्ञानम्, तस्य विषयतावच्छेदको धर्मः = णकारत्वककारत्वादिः, तदवच्छिन्न = 'ञमङणनम्', 'कपय्' - इत्यादिघटकणकारककारादिबोधक एव हल्प्रत्याहारः, न त्वबोधकः । तस्मान्नायं प्रत्याहारोऽत्र धर्त्तुं शक्यः । किन्तु तदबोधकः प्रत्याहारः = अण्-अजादिः, तेन तेषामनुबन्धानामग्रहणान्न हेतोर्व्यभिचारः ॥

**सन्दर्भाः**


1. पा. सू. 1.1.9 ।
2. पा. सू. 1.3.2 ।
3. पा. सू. 1.1.51 ।
4. पा. सू. 7.2.2 ।
5. पा. सू. 8.2.55 ।
6. पा. सू. 8.2.42 ।

7. पा. सू. 6.1.73 ।
8. पा. सू. 8.2.43 ।
9. पा. सू. 8.2.89 ।
10. पा. सू. 6.4.49 ।
11. पा. सू. 6.4.148 ।
12. पा. सू. 1.3.2 ।
13. पा. सू. 8.3.79 ।
14. पा. सू. 6.4.15 ।
15. पा. सू. 8.2.8 ।
16. पा. सू. 1.1.69 ।

आचार्यः ( व्याकरणविभागः )
राष्ट्रियसंस्कृतसंस्थानम्,
क. जे. सोमैयासंस्कृतविद्यापीठम्
विद्याविहारः, मुम्बई ।



# निपातननिर्वचनम्

✍डॉ.प्रियव्रतमिश्रः

**( भगवतः पाणिनेर्व्याकरणशास्त्रप्रणयनप्रवृत्तिः शब्दानां पुण्यजनकत्वरूपसाधुत्वज्ञापनाय । शब्दगत-पुण्यजनकत्वञ्च 'एकः शब्दः सुप्रयुक्तः' इत्यादिवेदवाक्येन सूच्यते । तच्च पुण्यजनकत्वं वा, तदव-च्छेदिका जातिर्वा, अखण्डोपाधिविशेषो वा साधुत्वं तत्तत्प्रतिनियतशब्दनिष्ठं लौकिकप्रमाणैरवधारयितु-मशक्यमिति कृत्वाऽऽन्तरचिन्तया परावरज्ञः पाणिनिः धातुपाठ-गणपाठ-सूत्रपाठ-लिङ्गानुशासनपाठ-शिक्षापाठैः शब्दाननुशशास । तत्र सूत्रपाठे सञ्ज्ञादिबोधकसूत्राणीव कानिचन निपातनसूत्राण्यपि लक्ष-णानुसारेणानुत्पद्यमानशब्दसाधनोपायभूतानि सन्ति विन्यस्तानि । तानि मनसि निधाय प्रवर्त्तितेऽस्मिन्नि-बन्धे काशिकाकौमुदीसप्रदीपोद्योतमहाभाष्यादिग्रन्थरत्नान्यालोड्य कृतं निपातनस्वरूपनिरूपणं मनोज्ञम् । तथा हि साधुत्वविधानं द्विविधम् । शब्दस्य साध्यत्वेन रूपेण, सिद्धत्वेन रूपेण च । तत्र सूत्रादलभ्यत्वे सति शब्दस्य सिद्धत्वेन रूपेण साधुत्वविधानं निपातनम् । एवञ्च निपातनसूत्राणामपि विधिसूत्रेष्वे-वान्तर्भाव इति विज्ञेयम् ।)**

**सारांशः** – महर्षिपाणिनिना प्रकल्पितेषूपायेषु "निपातनम्" इति विशिष्टस्थानमधिरोहति शास्त्रेऽस्मिन् । यतो हि प्रकृतिप्रत्ययकल्पनात्मके शास्त्रे निपातनमित्यतिरिक्तः कश्चन विषयविशेषः । ते ते शब्दाः तथैव साधवो भवन्ति यथा आचार्यैरुपदिष्टाः प्रकृतिप्रत्ययप्रक्रियासंरचनं विनापि । तत्र निपातनस्य किं स्वरूपम्? षड्विधेषु सूत्रेषु निपातनं कुत्रान्तर्भवति? निपातनस्य किं कार्यम्? प्रयोजनञ्च किम्? विधिनिपातनयोर्भेदः कः? भाष्यकैयटयोः किम्मतमत्रेत्येते विषयाः यथाशास्त्रं शोधपत्रेऽस्मिन् विविच्यन्ते ।

**विशिष्टाः प्रयुक्तशब्दाः** – निपातनम्, बाधकम्, विकल्पार्थः, देश्याः, अधिकार्थविवक्षा ।

**वाङ्मुखम्** – सुरगिरा निर्दुष्टवाग्व्यापारविधानाय काव्यरसपानाय सदसद्विचारप्रवर्त्तकशास्त्रावबोधायास्ति पाणिनीयव्याकरणस्य महत्त्वं सर्वसम्मतं मतम् । तदिदं पाणिनीयव्याकरणं काले काले चमत्करोति चित्तं स्वप्रणयन-शैल्या । उपचतुस्सहस्रं सूत्रैः कृत्स्नं शब्दसंसारं निर्दुष्टं प्रस्तावयत्यस्माकं पुरस्तादित्यहो ! बुद्धिवशाल्यमाचार्यस्य । अत एव काशिकाकारोऽप्याह –"महती सूक्ष्मेक्षिका वर्त्तते आचार्यस्य"[1] इति । तथाविधा व्यवस्थाः पाणिनिना शास्त्रेऽस्मिन् प्रकल्पिताः येनाञ्जसा शास्त्रमिदं सकलं शब्दजालं प्रकटयति । तत्र निपातनानां महत्त्वं शास्त्रेऽस्मिन् भृशं समचर्चि। निपातनं नाम यत्र सूत्रैः प्रकृतिप्रत्ययविभागपुरस्सरं शब्दाः न निष्पद्यन्ते प्रत्युत वाङ्मये तत्तादृशाः शब्दाः प्रयुक्ताः तान् शब्दान् निपातनेन साधयति पाणिनिः ।

**निपातनविधेः स्वरूपम्** – पाणिनेः षड्विधेषु सूत्रेषु विधिसूत्रं प्राधान्यमावहति । विधिसूत्रञ्च त्रिविधम् – उत्सर्गविधिः, अपवादविधिः, निपातनविधिश्चेति । तत्र सामान्येन यो विधिः स उत्सर्गविधिरित्युच्यते । विशेषेण

यो विधिः स च अपवाद इत्युच्यते । निपातनम् तु रूढ्यर्थे भवति । आचार्याणां विशिष्टशब्दप्रयोगो निपातनपद-वाच्यो भवति । सूत्रेणानुपपन्नोऽप्याचार्येण सूत्रादिषु व्यवह्रियमाणशब्दो निपातनात् सिद्ध्यति । तदुक्तं काशिकायाम् – "यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात् सिद्धम् ।"[2] तथाहि –

"छन्दसि निष्टर्क्य-देवहूय-प्रणीयो-न्नीयोच्छिष्य-मर्यस्तर्याध्वर्य-खन्य-खान्य-देवयज्या-पृच्छ्य-प्रतिषीव्य-ब्रह्मवाद्यभाव्य-स्ताव्योपचाय्य-पृडानि"[3] इति सूत्रेण वेदे एते शब्दाः निपात्यन्ते । निष्टर्क्यादयः शब्दाश्छन्दसि विषये निपात्यन्ते इति तद्वृत्तिः । तत्र चोक्तम् – "यदिह लक्षणेन अनुपपन्नं तत्सर्वं निपातनात्सिद्धम् । यथा – "निष्टर्क्य" इति प्रयोगः – "कृती छेदने" इत्यस्मान्निस्पूर्वात् क्यपि प्राप्ते ण्यत्, आद्यन्तविपर्ययः, निसश्च षत्वं निपात्यते । "निष्टर्क्यं चिन्वीत पशुकामः" । एवञ्च उपर्युक्तशब्दाः तथैव बोध्याः । अनेन त्वेतत्सिद्धं 'सूत्रेण यन्न सिद्ध्यति तन्निपातनेन सिद्ध्यति' । अत एव अन्यथा प्राप्तस्यान्यथोच्चारणं निपातनमित्यपि प्रवादः । निपातनानि च बाध-कान्यपि भवन्ति । तद्यथा "सर्वादीनि सर्वनामानि"[4] इति सूत्रे भाष्ये "सर्वनामानि" इत्यत्र "न"कारस्य णत्वं प्राप्तं "पूर्वपदात्संज्ञायामगः"[5] इति सूत्रेण अतः तस्य प्रतिषेधो वक्तव्य इति शङ्का प्रकटिता । तत्र समाधानवार्त्तिकेन "सर्वनामसंज्ञायां निपातनाण्णत्वाभावः" इत्युक्तम् । ननु किन्नाम निपातनमिति जिज्ञासायां यथा प्रतिषेधः तथा निपातनमिति । कस्तर्हि प्रतिषेधः ? इति चेत् अविशेषेण किञ्चिदुक्त्वा विशेषेण "न" इत्युच्यते तत्र व्यक्त-माचार्यस्याभिप्रायो गम्यते "इदं न भवतीति" समाहितम् । तदा समाधानभाष्येणापि इत्थमेवोक्तं निपातनमप्येवं-जातीयकमेव । अविशेषेण णत्वमुक्त्वा विशेषेण निपातनं क्रियते तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते "इदं न भव-तीति" । एवञ्च सिद्धान्तितसमाधानभाष्ये इत्थमेवोक्तं "बाधकान्येव हि निपातनानि भवन्ति" । निपातनञ्च रूढ्यर्थमपि भवतीति "राजसूय............"[6] इत्यादिसूत्रे तत्त्वबोधिन्यां प्रतिपादितम् ।

**निपातनविधेः कार्याणि** – निपातनात् त्रिविधं कार्यं सम्पद्यते । अप्राप्तेः प्रापणम्, प्राप्तेर्वारणम्, अधिकार्थविवक्षा च । अत एवोक्तं पाणिनीयव्याकरणस्यानुशीलनमिति ग्रन्थस्य कर्त्रा –

**अप्राप्तेः प्रापणं चापि प्राप्तेर्वारणमेव वा ।**
**अधिकार्थविवक्षा च त्रयमेतन्निपातनम् ।।**[7]

क्रमेणोदाहरणान्यत्र प्रस्तूयन्ते –

पाणिनेरनुसारेण अतिपूर्वकात् शीङ्धातोर्ल्युटि "अतिशयनम्" इति रूपेण भाव्यं परञ्च "अतिशायने तम-बिष्ठनौ"[8] इति सूत्रे तेन स्वयमेव "अतिशयनम्" इति स्थाने "अतिशायनम्" इति शब्दः प्रयुक्तः । अत एवात्र "अतिशायनम्" इति शब्दो निपातनात् दीर्घत्वेन साध्यते । अत्र प्रमाणं भाष्याकाराणामिदं वचनमेव – "देश्याः सूत्र-निबन्धाः क्रियन्ते अतिशयनमतिशायनं प्रकर्षः निपातनात् दीर्घः ।"[9] अत्र केनापि सूत्रेणाप्राप्ते दीर्घो निपातनात् विधीयते । तत्र "अतिशायने तमबिष्ठनौ" इति सूत्रे भाष्ये अतिशायन इत्युच्यते – किमिदमतिशायन इति ? तत्र

प्रदीपे प्रश्नस्याशयं स्पष्टयति - किमयं ण्यन्तस्य निर्देश आहोस्विदण्यन्तस्य, कश्चेह शेत्यर्थ इति सन्दिहानः पृच्छति । तदा देश्याः सूत्रनिबन्धाः ..... इत्युच्यते तस्य चाशय इत्थम् -

देश्याः[10] = साधुत्वेन प्रतिपाद्याः एते सूत्रे निबध्यन्ते प्रसङ्गेन साधुत्वप्रतिपादनार्थं, ततो निपातनाद् दीर्घत्वमित्युक्तं भवति । अनेन भाष्यकैयटेन एतत्तु स्पष्टं यत् इतरसूत्रेणाप्राप्तो दीर्घो निपातनात् विधीयते इति । इत्थञ्च निपातनस्य प्रथमं प्रयोजनम् - अप्राप्तेः प्रापणम् ।

प्राप्तेर्वारणं तावत् द्वैतीयीकं कार्यं निपातनस्य । तद्यथा - "अवद्यम्" इति पदम् "अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु"[11] इति सूत्रेण निपात्यते । अत्र "वदः सुपि क्यप् च" इति सूत्रेण यत्क्यपोः उभयोरेव प्राप्तयोर्निपातनात् यदेव भवति सोऽपि गर्हायामेव । तदुक्तं दीक्षितेन "वदेर्नञुपपदे वदः सुपीति यत्क्यपोः प्राप्तयोर्यदेव सोऽपि गर्हायामेवेत्युभयार्थं निपातनम्" इति । एवञ्च प्राप्तस्यात्र निपातनेन वारणमिति द्वितीयं प्रयोजनम् ।

तार्त्तीयीकं प्रयोजनं तावत् अधिकार्थविवक्षा । तद्यथा यत्र प्रत्ययानुसारेण निपातितशब्दार्थो न घटते तत्र निपातनत्वेन तदर्थाभ्युपगमोऽपि भवति । यथा - अध्यारूढशब्दात् "अधिकम्"[12] इति सूत्रेण निपातत्वात् कन् प्रत्यये उत्तरपदलोपे च "अधिकम्" इति शब्दो निष्पद्यते । अध्यारूढशब्दः कर्त्तुः कर्मणो वा वाचकः । अतस्तत्स्थाने निपातितोऽधिकशब्दोऽपि तदर्थक एव । स चार्थः "अधिको द्रोणः खार्याम् अधिका खारी द्रोणेन इत्यादिषु प्रयोगेषु परिलक्ष्यते । अयमर्थावगमोऽपि विषयभेदे भवति न तु समानार्थे । यदि पुनरधिशब्दात् समाधानक्रियावचनात् कन् निपात्यते तदा कर्त्तृकर्मणोरन्यतरस्यैवाभिधानं प्राप्नोति । अध्यारूढशब्दस्तु उभयार्थ इति तस्यैवेदमङ्गीकृतसाधनभेदे निपातनमुचितम् । तदुक्तं कैयटेन ''लौकिकप्रयोगे अधिकशब्देन विषयभेदेन कर्त्तृकर्मणोरभिधानदर्शनादङ्गीकृतसाधनभेदेनाध्यारूढस्येदं निपातनं स चोभयार्थ इति न कश्चित् दोषावसरः" ।[13] तदेवमत्र निपातनबलेनार्थद्वयस्यावगमो भवति - कर्त्तुः कर्मणश्च । एवं क्रमेणाधिकार्थविवक्षा निपातनेन साध्यते ।

कदाचिच्च विकल्पार्थोऽपि निपातनं भवति । अत एवोक्तं काशिकायाम् - विकल्पार्थं निपातनम्" इति । तदित्थम् - "वा दान्तशान्तपूर्णदस्ता स्पष्टच्छन्नज्ञप्ताः"[14] इति सूत्रे दम्, शम्, पुरी, दस्, स्पश्, छद्, ज्ञप् इत्येतेषां ण्यन्तानां धातूनां वा अनिट्त्वं निपात्यते । दान्तः, दमितः इत्यादीन्युदाहरणानि । अत्र इट्प्रतिषेधो णिलुक्च निपात्यते । ज्ञपेस्तु भरज्ञपिसनामिति विकल्पविधानात् यस्य विभाषेति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं निपातनमिति ।

**निपातनविधेः प्रयोजनम्** - निपातनाद् विभिन्नविधीनां सम्पादनं भवति । तदुक्तं प्रदीपे - अनेकप्रयोजनसम्पत्तिर्निपातनाद् भवतीति । तत्र "तत्पुरुषे तुल्यार्थतृतीया-सप्तम्युपमाना-व्ययद्वितीयाकृत्याः"[15] इति सूत्रे सिद्धान्तवार्त्तिकं "निपातनात्सिद्धम्" इत्यवतीर्णम् । तत्र किं नाम निपातनमिति जिज्ञासायाम् "अनेकप्रयोजनसम्पत्तिर्निपातनाद् भवतीति कैयटेन प्रावादि । निपातनात् शब्दनिष्पत्तौ सूत्रीयशब्देषु च लाघवं जायते । समाने अहनि इत्यर्थे "सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः"[16] इति सूत्रेण निपातनाद् समानस्य

सभावो द्यश्च प्रत्ययो भवति । निपातनाभावे तु समानस्य सभावो द्यश्चाहनि इति सूत्रनिर्देश आवश्यकः । निपात-नादल्पप्रयत्नेनाप्यधिकार्थलाभो भवतीति "अधिकम्" इति शब्दनिपातने दर्शितमेव ।

**विधिनिपातनयोर्भेदः** - विधिसूत्रेषु प्रकृतिप्रत्ययादीनां निर्देशो भवति, निपातनसूत्रेषु सिद्धशब्दानाम् । तदुक्तं प्रदीपे - विधिनिपातनयोश्चायं भेदो यत्रावयवा निर्दिश्यन्ते समुदायोऽनुमीयते स विधिः[17], यत्र तु समुदायः श्रूयतेऽवयवाश्चानुमीयन्ते तन्निपातनम्" । तद्यथा - पङ्क्तिविंशति.... इति सूत्रेण विंशत्यादयः शब्दाः निपात्यन्ते ।[18] भाष्ये चेत्थमुक्तम् - इमे विंशत्यादयः सप्रकृतिकाः सप्रत्ययकाश्च निपात्यन्ते । तत्र न ज्ञायते का प्रकृतिः ? कश्च प्रत्ययः? इति । कैयटेन च अथ प्रकृतित्वमेषां कस्मान्न विज्ञायते ? पञ्चम्याः प्रत्ययस्य चानुपादानात्, अनिष्पन्नस्य च प्रकृतित्वाभावात् । प्रत्ययत्वं तर्हि कस्मादेषां न भवति ? लोके केवलानां प्रयोगादर्शनात् । "शताच्च ठन्यतावशते"[19] "विंशत्यादिभ्यः" इति शास्त्रे च केवलानामुच्चारणात् । विधिनिपातनयोश्चायं भेदो यत्रावयवा निर्दिश्यन्ते समुदायोऽनुमीयते स विधिः, यत्र तु समुदायः श्रूयते अवयवाश्चानुमीयन्ते तन्निपातनमिति ।

एवञ्च निपातनविषये इह मनाक् विहङ्गवीक्षणं व्यधायि यथाशास्त्रमित्यलं पल्लवितेन ।

**सन्दर्भाः** -


1. काशिका-४-२-७४
2. का.-३-१-२३
3. तत्रैव
4. म.भा.-१-१-२७
5. अ. ८-४-३
6. वै.सि.कौ.२८६५
7. पा.व्या.अ. पृ १०३
8. म.भा. ५-३-५५
9. तत्रैव
10. म.भा.प्र.५-३-५५
11. वै.सि.कौ. २८४९
12. अ. ५-२-७३
13. म.भा.प्र.५-२-७३
14. का. ७-२-२७
15. म.भा. ६-२-२

16. वै.सि.कौ. २६७३
17. म.भा.प्र ५-१-५९
18. तत्रैव
19. वै.सि.कौ. १६८६

**सन्दर्भग्रन्था**ः -


1. व्याकरणमहाभाष्यम् - पतञ्जलिः - सं. गिरिधरशर्माचतुर्वेदी - चौखम्बा सुरभारती प्रकाशन, वाराणसी - २००५ ।
2. वै.सिद्धान्तकौमुदी - भट्टोजिदीक्षितः - सं.श्रीगोपालदत्तपाण्डेयः - चौखम्बासुरभारतीप्रकाशन, वाराणसी - २०११ ।
3. काशिकावृत्तिः - वामनजयादित्यौ सं. - प. ईश्वरचन्द्रः - सुधी प्रकाशन, वाराणसी - २००६ ।
4. अष्टाध्यायी - पाणिनिः - सं. - श्री चन्द्रवसुः - चौखम्बा संस्कृत संस्थान, वाराणसी- २००३



**सहायकाचार्यो व्याकरणविभागे**

**श्रीरामसुन्दरसंस्कृतविश्वविद्याप्रतिष्ठानम्, रमौली**

**( आदर्शसंस्कृतमहाविद्यालयः )**

**दरभङ्गा-847201 ( बिहारम् )**




# ङमुड्विधायकसूत्रे नागेशभट्टोजिदीक्षितयोर्मतवैचित्र्यम्

✍डॉ. गणेश्वरनाथझाः

**( विदुषा झोपाख्येन ङमुड्विधायकसूत्रमाश्रित्य महाभाष्यतत्प्रदीपाद्यातशेखरमनोरमासिद्धान्तकौमुदीकौस्तु-भाद्यालोके श्रमक्रमाभ्यां दीक्षितनागेशयोर्मतमत्र निरूप्य तत्र नागेशमतस्य ज्यायस्त्वं नानायुक्तिभिः प्रति-पादितम् । तत्र दीक्षितमतम्, सूत्रे नित्यग्रहणप्रयोजनम्, सूत्रोदाहरणानि, अचीत्यस्य षष्ठ्यन्तत्वेन विपरिणामे बीजप्रदर्शनम्, दीक्षितोक्तसूत्रार्थे दोषोद्भावनं तत्समाधानञ्च, वार्त्तिकस्वीकारस्यावश्यकता, प्राचीनोपदर्शि-तोपायखण्डनम्, हरिदीक्षितमतेन सूत्रार्थविचारः, शेखरकाराणां मतम्, नागेशभट्टोजिदीक्षितमतयोर्विवेकः - इत्येतासु श्रेणीषु विवेच्यविषयान् विभज्य यद् विवेचननिरूपणनिष्कर्षणप्रागल्भ्यं निबन्धेऽस्मिन् निबन्ध-कारेण प्रदर्शितम्, नूनं तत् प्रशस्यमनुकरणीयञ्चेति दृढं प्रतीमः ॥)**

अष्टमाध्यायस्य तृतीयपादस्य द्वात्रिंशत्तमं ङमुडागमविधायकं पञ्चपदात्मकमिदं सूत्रम् । तत्र ङमः इति पञ्चम्यन्तं, ह्रस्वादिति पञ्चम्यन्तम्, अचीति सप्तम्यन्तं, ङमुडिति प्रथमान्तं, नित्यमित्यपि प्रथमान्तं पदम् । अत्र ह्रस्वादित्यत्र या पञ्चमी सा दिग्योगलक्षणा पञ्चमी वर्तते । एवञ्च दिग्योगलक्षणपञ्चम्यन्तपदघटिते शास्त्रे निर्दिष्टाद् उत्तरस्य इति पदद्वयमुपतिष्ठते इत्यर्थिकया तस्मादित्युरस्य इत्यनया परिभाषया निर्दष्टे पूर्वस्येति पदद्वय-स्योपस्थितिर्जायते । तत्र निर्दिष्टपदार्थस्य ह्रस्वपदार्थेऽभेदेनान्वयः उत्तरपदार्थस्य च अभेदेन ङम्पदार्थे अन्वयः, ह्रस्वाव्यवहितोत्तरत्वविशिष्टो यो ङम् इति अयमर्थः निष्पद्यते । अस्मिन् सूत्रे पदस्य इत्यधिक्रियते तच्च ङम इत्यनेन सामानाधिकरण्यानुरोधात् पदस्येति षष्ठ्यन्तं पदं पञ्चम्यन्ततया विपरिणम्यते । एवञ्च ङम्पदार्थस्य पदपदार्थे अभेदसम्बन्धेन विशेषणाद् अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकं पदम् आत्मान्तस्य बोधकं स्याद् इत्यर्थकेन येन विधिस्तदन्तस्य इति सूत्रेण तदन्तविधौ सति ह्रस्वाव्यवहितोत्तरत्वविशिष्टो यो ङम् तदन्तं यत् पदमित्ययमर्थो निष्पद्यते । अत्र सूत्रे अचीति सप्तम्यन्तं पदं दृष्ट्वा तस्मिन्निति निर्दिष्टे पूर्वस्येति शास्त्रस्य ङम इति दिग्योग-लक्षणपञ्चम्यन्तं पदं दृष्ट्वा तस्मादित्युत्तरस्य च प्राप्तिरित्युभयोः सूत्रयोः प्राप्तयोः सतोः 'उभयनिर्देशे पञ्चमी निर्देशो बलीयान्' इत्यनया परिभाषया पञ्चमीनिर्देशस्य बलवत्त्वबोधनेन अचीति सप्तम्यन्तं पदं षष्ठ्यन्ततया विपरिणम्यते । एवञ्च ह्रस्वाव्यवहितोत्तरत्वविशिष्टो यो ङम् तदन्तं च यत् पदं तदव्यवहितोत्तरत्वविशिष्टस्य अचः नित्यं ङमुडागम इत्यर्थो निष्पद्यते । अत्र सूत्रार्थे दीक्षितनागेशयोः महान् मतभेदो दृश्यते । तत्र पूर्वं दीक्षितमतं प्रस्तूयते –

**दीक्षितमतम्** – दीक्षितमते च ह्रस्वाव्यवहितपूर्वत्वविशिष्टो यो ङम् तदन्तं च यत् पदं तदव्यवहितोत्तरत्व-विशिष्टाचो नित्यं ङमुडागमः स्यादित्ययमेवार्थः । अत्र ङम् इति प्रत्याहाररूपायां सञ्ज्ञायां कृतं टित्वं सामार्थ्यात् सञ्ज्ञिभिः सह सम्बध्यते तेन यथासंख्यमनुदेशः समानामिति सूत्रस्य प्रवृत्त्या ङुट् णुट् नुट् एते त्रयः आगमाः

ङम्पदबोध्याः क्रमेण भवन्ति इति अर्थः निष्पद्यते । अत्र इयमाशङ्का जायते यत् सर्वत्र विशेष्यवाचकपदानुरोधादेव विशेषणवाचकस्य पदस्य विभक्तिविपरिणाम उक्तः किन्तु अत्र विशेषणवाचकपदं ङम इति तच्च पञ्चम्यन्तं तत्सामानाधिकरण्यानुरोधात् विशेष्यवाचकस्य पदस्य पञ्चम्यन्तस्य विपरिणामो नोचितः इति दीक्षितोक्तार्थः नैव सुष्ठु प्रतिभाति इति चेदुच्यते विशेषणवाचकविभक्तिविपरिणामो न सार्वत्रिकः यतो हि – 'टाङसिङसामिनात्स्याः' इत्यस्मिन् सूत्रे अङ्गस्य इत्यधिक्रियते 'अतो भिस ऐस्' इत्यतः अत इत्यनुवर्तते । तत्र अत इति अङ्गस्य इत्यत्र विशेषणतया अन्वेति । अत्र विशेषणवाचकपदम् अत इति तच्च पञ्चम्यन्तं, पूर्वसूत्रे तथा दृष्टत्वात् । एवञ्च अत इति पञ्चम्यन्तपदसामानाधिकरण्यानुरोधाद् अङ्गस्य इति षष्ठ्यन्तं पञ्चम्यन्तत्वेन विपरिणम्य अदन्तादङ्गात् परस्य टादीनामिनात्स्या इत्येते आदेशाः स्युरित्यर्थः सिद्धान्तकौमुद्यां दीक्षितेन स्वीकृतः । अतः दीक्षितमते विशेषण–वाचकपदानुरोधादपि विशेष्यवाचकपदस्य विभक्तिविपरिणामो दृश्यते । अतो दीक्षितमते अयमर्थः समीचीन एव ।

**सूत्रे नित्यग्रहणप्रयोजनम्** – अत्र पुनरियमाशङ्का जायते यदस्मिन् सूत्रे नित्यग्रहणं किमर्थमिति ? यतो हि सूत्रमिदं 'हे मपरे वा' इति 'मय उञो वो वा' इति च विभाषाद्वयमध्ये पठितम् । एवञ्च विभाषाद्वयमध्ये च ये विधयस्ते नित्याः भवन्ति इति 'पूङः क्त्वा च' इति सूत्रभाष्योक्तरीत्या ङमो ह्रस्वादचि ङमुण्नित्यम् इति सूत्रस्य विभाषाद्वयमध्ये पठितत्वेन नित्यार्थस्य लाभसम्भवेन पुनः सूत्रे नित्यग्रहणं व्यर्थमिति चेदुच्यते अत्र सूत्र नित्यग्रहणं स्पष्टप्रतिपत्त्यर्थम् । तदुक्तं प्रौढमनोरमायां – "नित्यग्रहणं विस्पष्टार्थम् । हे मपरे वा इति मञ उञो वो वा इति च विकल्पद्वयस्य मद्ध्ये पाठादेव नित्यत्वलाभात् ।" अत्र इदमाशङ्क्यते यद्विभाषामध्ये ये विधयः ते नित्या इति भाष्योक्तवचनप्रामाण्येन ङमो ह्रस्वादचि ङमुण्नित्यम् इति सूत्रे नित्यग्रहणाभावेऽपि नित्यत्वस्य लाभो यदि सम्भवति चेत् सूत्रे नित्यग्रहणं विस्पष्टार्थम् इति दीक्षितानां मते विभाषाद्वयमध्ये पठितत्वात् 'डः सि धुट्', 'नपरे नः' इत्यादिसूत्राणामपि नित्यत्वापत्तिरिति चेद् अत्रेदं बोध्यं यत् 'हे मपरे वा' इत्यत्र भगवता पाणिनिना 'वा' ग्रहणं कृतं वर्तते । अथ च 'मय उञो वो वा' इत्यत्रापि वाग्रहणं कृतम् । तत्र हे मपरे वा इत्यत्र वाग्रहणे स्वरित–त्वप्रतिज्ञाबलादेव मय उञो वो वा इति सूत्रेऽपि वाग्रहणेऽनुवर्तमाने मय उञो वो वा इति सूत्रे पुनर्वाग्रहणसामर्थ्यात् मय उञो वो वा इति सूत्रादव्यवहितपूर्वसूत्रे एव 'वा' इत्यस्यानुवृत्तेर्निवृत्तिः कल्पनीया । अन्यत्र तु निवृत्तिकल्पने प्रमाणाभावात् 'डः सि धुट्', 'नपरे नः' इत्यादौ वा इत्यस्य सम्बन्धः भवत्येव, अतः तेषां न नित्यत्वप्रसक्तिः ।

**सूत्रोदाहरणानि** – अस्य सूत्रस्य उदाहरणानि त्रीणि "सन्नच्युतः, सुगण्णीशः प्रत्यङ्ङात्मा" सिद्धान्त–कौमुद्यां प्रदर्शितानि । तत्र गण संख्याने इत्यस्माद्धातोः णिचि 'सुगण इ' इति स्थितौ अतो लोपः इति शास्त्रेण अल्लोपे कृते सति सुष्ठु गणयति इति विग्रहे सुगणि इत्यस्मात् क्विप्प्रत्यये कृते णेरनिटीत्यनेन णिलोपे च कृते क्विपः सर्वापहारिलोपे पुनः ईश इत्यनेन साकम् अन्वये कृते 'सुगण् ईश' इति स्थिते अत्र ह्रस्वादव्यवहितोत्तर–त्वविशिष्टङम्पदबोध्यः णकारः तदन्तं पदं सुगण् इति तदव्यवहितोत्तरविशिष्टाच्पदबोध्यस्य ईशघटकस्य ईकारस्य

णुडागमो भवति । एवञ्च सुगण्णीश इति प्रयोगः सिध्यति । अत्र इदमाशङ्क्यते यत् माथितिकः प्रत्यैषिषन् इत्यादिप्रयोगसिध्यर्थम् 'अचः परस्मिन् पूर्वविधौ' इत्यत्र पूर्वस्माद् विधिः पूर्वविधिरिति पञ्चमीसमासस्य आवश्यकत्वात् तस्मिन्पक्षे 'अचः परस्मिन् पूर्वविधौ' इति सूत्रस्य परनिमित्तकोऽजादेशः स्थानिवत् स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये इत्यर्थस्य निष्पद्यमानतया सुगण्णीश इति प्रयोगस्य सिद्धिर्न स्यात् । तथाहि सुगण् ईशः इत्यत्र परनिमित्तकोऽजादेशः अल्लोपरूपाजादेशः स स्थानिवत् स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टः ङम्पद-बोध्यः णकारस्तदव्यवहितोत्तरत्व-विशिष्टः ईकारः तस्य ङमुडागमः कर्तव्यः । एवञ्च अचः परस्मिन् पूर्वविधौ इति सूत्रेण स्थानिवद्भावे 'सुगण ईशः' इत्यत्र सुगणशब्दस्य ङमन्तपदत्वाभावात् तदव्यवहितोत्तरत्वविशिष्टाच्पदबोध्यस्य ईकारस्य ङमुडागमः न स्यात् इति चेत् उच्यते 'पूर्वत्रासिद्धीये न स्थानिवत्' इति वार्त्तिकेन अत्र 'अचः परस्मिन् पूर्वविधौ' इति सूत्रेण विधीयमानस्य स्थानिवद्भावस्यात्र निषेधो भवति यतः ङमो ह्रस्वादचि ङमुण्नित्यम् सूत्रं त्रिपादीस्थं एवञ्च त्रिपादोस्थे कार्ये कर्तव्ये अत्र अचः परस्मिन् पूर्वविधौ इत्यनेन सूत्रेण अत्र स्थानिवद्भावो न भवति तस्माद् सुगण् इत्यस्य ङमन्तपदत्वम् अस्त्येव तदव्यवहितोत्तरविशिष्टस्य अच्पदबोध्यस्य ईशघटकस्य ईकारस्य णुडागमः सिद्ध्यत्येव । पुनरत्र आशङ्क्यते यत् 'पूर्वत्रासिद्धीये न स्थानिवत्' इत्यस्य वार्त्तिकस्य निषेधकं वार्तिकं "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" इति, तस्य वार्तिकस्य विद्यमानत्वात् अत्र च णत्वस्यैव विधातव्यतया णत्वकर्तव्यतायां 'पूर्वत्रासिद्धीये न स्थानिवत्' इत्यस्य वार्त्तिकस्य निषेधात् अत्र 'अचः परस्मिन् पूर्वविधौ' इत्यनेन स्थानिवद्भावः दुर्वारः एव स्यात् तर्हि अत्र उच्यते यत् 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति वार्तिकघटक-लत्वसाहचर्येण आदेशरूपस्यैव णत्वस्य ग्रहणात् प्रकृतस्थले आगमरूपस्य णत्वस्य सत्त्वात् 'तस्य दोषः संयोगादि-लोपलत्वणत्वेषु' इत्यस्य वार्त्तिकस्य अप्रवृत्या 'पूर्वत्रासिद्धीये न स्थानिवत्' इति वार्त्तिकस्य निषेधः न भवति । एवञ्च स्थानिवद्भावस्य निषेधे कृते सति पूर्वोक्तरूपसिद्धौ न किमपि बाधकम् । वस्तुतस्तु 'तस्य दोषः संयोगादि-लोपलत्वणत्वेषु' इत्यस्मिन् वार्त्तिके यदा 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्' इत्यस्याः परिभाषायाः प्रवृत्तिः स्यात् तदैव तस्य वार्त्तिकस्य अयमर्थः वक्तुं शक्यते । परन्तु 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्' अस्याः परिभाषाया अनित्यत्वात् कथञ्चित् 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति वार्त्तिके परिभाषाया अप्रवृत्तौ 'पूर्वत्रासिद्धीये न स्थानिवद् इत्यस्य वार्त्तिकस्य निषेधः प्रसज्येत । तथा सति प्रकृते स्थानिवद्भावस्यानिषेधात् दोषः स्यादेवेत्याकाङ्क्षायाम् उच्यते - पञ्चमीसमासस्याप्यनित्यत्वाद् सुगण् ईशः इत्यत्र अल्लोपस्य स्थानिवद्भावाभावेन न कोऽपि दोषः । पूर्वविधौ इत्यत्र पञ्चमीसमासस्य अनित्यत्वे ज्ञापकं तु निष्ठायां सेटीति सूत्रे सेटिग्रहणमेव । तच्च सेट्ग्रहणं किमर्थं कृतमिति चेन्न तावद् अनिड्व्यावृत्यर्थं सेड्ग्रहणं कृतं यतो हि ण्यन्तस्थले सर्वेषां धातूनाम् अनेकाच्त्वात् 'एकाच उपदेशेऽनुदात्तात्' इत्यस्य प्रवृत्त्यभावान् न कस्माच्चिद्धातोः परस्य प्रत्ययस्य अनिट्त्वं भवति तस्मात् अनिड्व्यावृत्यर्थं सेडिति वक्तुं न शक्यते अपितु कालावधारणार्थमेव सेड्ग्रहणं कृतम् । यतो हि यदि

कालावधारणं न स्यात् तर्हि कारितः इति प्रयोगस्य सिद्धिर्न स्यात् इटः प्राक् णिलोपश्चेत् कृ त इत्यत्र एकाच्त्वात्तदव्यवहितोत्तरत्वविशिष्टस्य निष्ठासंज्ञकस्य वलाद्यार्धधातुकस्य 'त' इत्यस्य इडागमाभावेन कारितः भावितः इत्यादि प्रयोगाणां सिद्धिर्न स्यात् । अतः कालावधारणार्थमेव सूत्रे सेट् ग्रहणं कृतं यदि पञ्चमी समासः नित्यः स्यात् तर्हि सूत्रे सेड्ग्रहणं व्यर्थम् । यतो हि कालावधारणाभावेऽपि इटः प्रवृतेः प्राक् णिलोपे कृतेऽपि 'कृ त' इत्यवस्थायाम् अत्र परनिमित्तकोऽजादेशः णिलोपरूपः अजादेशः स स्थानिवत् स्यात् स्थानिभूतः अचः इकारः ततः पूर्वत्वेन दृष्टः 'कृ त' इति तदव्यवहितपूर्वत्वविशिष्टस्य 'त' इत्यस्य इडागमे कर्तव्ये स्थानिवद्भावः स्यात् । एवञ्च कृ इत्यस्य अनेकाच्त्वात् एकाच उपदेशेऽनुदात्तादिति सूत्रस्य अप्रवृत्या इडागमे कृते कारितः भावितः इत्यादिप्रयोगाणां सिद्धिः स्यादेव । तथा च सूत्रे सेड्ग्रहणं व्यर्थं स्यात् । तदेव व्यर्थीभूय ज्ञापयति पञ्चमीसमासोऽनित्य इति । पञ्चमीसमासस्य अनित्यत्वफलं तु विगणय्य इति । तथाहि 'वि' उपसर्गात् गणसंख्याने धातोः णिचि 'क्त्वा' प्रत्यये कृते सति "समासेऽनञ्पूर्वो क्त्वो ल्यप्" इति सूत्रेण ल्यबादेशे वि गण णि य इति जाते "ल्यपि लघुपूर्वात्" इति सूत्रेण अयादेशे विगणय्य इति प्रयोगः सिध्यति यदि पञ्चमीसमासः नित्यः तर्हि विगणय्य इति प्रयोगस्य सिद्धिर्न स्यात् । यतो हि "वि गण णिच् य" इत्यवस्थायां "अल्लोपोऽनः" इत्यनेन गणावयवस्य अकारस्य लोपे कृते परनिमित्तकस्य अल्लोपरूपाजादेशस्य स्थानिभूतादचः पूर्वत्वेन दृष्टो यो गकारोत्तरवर्ती अकारः तस्मात् परस्य णेः इत्यस्य अयादेशकर्तव्यतायां स्थानिवद्भावः स्यात् । एवञ्च अत्र अकारात् पूर्वः णकार एव स्यात् न तु गकारोत्तरवर्त्यकारः। अतः 'गण' इत्यस्य लघुपूर्वत्वाभावात् तदवधिकपरत्वविशिष्टस्य णेः इत्यस्य अयादेशो न स्यात्। एवञ्च विगणय्य इति प्रयोगः न सिद्ध्येत् । तस्माद् तत्सिध्यर्थं पञ्चमीसमासस्य अनित्यत्वं कल्पनीयम् । पञ्चमीसमासस्य अनित्यत्वकल्पनायान्तु अनित्यत्वादेव स्थानिवद्भावस्याप्रवृत्तौ लघुपूर्वत्वस्य सत्त्वात् अयादेशे कृते सति 'विगणय्य' इत्यादिप्रयोगाः सिद्ध्यन्त्येव । ननु 'विगणय्य' इत्यादिप्रयोगाणां सिद्ध्यर्थं पञ्चमीसमासस्य अनित्यत्वं न कल्पनीयम् । पञ्चमीसमासस्य नित्यत्वेन स्थानिवद्भावे कृतेऽपि 'वि गण णिच्' इत्यवस्थायाम् अत्र लघुपूर्वः व्यपदेशिवद्भावेन अकार एव लघुपूर्वत्वस्य 'गण' इत्यत्र सत्त्वात् तदवधिकोत्तरविशिष्टस्य णेः इत्यस्य अयादेशः सिद्ध्यति । एवञ्च विगणय्य इत्यस्य सिद्धिः स्यादेवेति चेदत्रोच्यते व्यवदेशिवद्भावेन पूर्वत्वं परत्वं च अतिदेष्टुं न शक्यते यदि च अतिदिश्यते तथा सति दधि मधु इत्यादावपि यणादेशस्य प्रसक्तिः स्यात् । यतो हि अत्र इक्पदबोध्यः दधिशब्दावयव इकारः एवम् अच्पदबोध्यः दधिशब्दावयव इकारः तदवधिकपूर्वत्वविशिष्टः इकारः तस्य स्थाने यणादेशः स्यात् एवञ्च व्यपदेशिवद्भावेन पूर्वत्वं परत्वञ्च यद्यतिदिश्यते तदा अच्परकत्वे दधि मधु इत्यादौ यणादेशप्रसक्त्या पूर्वत्वं परत्वञ्च व्यपदेशिवद्भावेन अतिदेष्टुं न शक्यते तस्मात् पञ्चमीसमासस्य अनित्यत्वाभावे 'विगणय्य' इतिप्रयोगः न सिद्ध्येदतस्तत्सिध्यर्थं पञ्चमीसमासस्य अनित्यत्वमवश्यं कल्पनीयम् ।

एवञ्च सुगण्णीशः इत्यत्र स्थानिवद्भावे कर्तव्ये अचः परस्मिन् पूर्वविधौ सूत्रं न प्रवर्तते तस्मात् सुगण इत्यस्य ङम्पदबोध्यस्य तदव्यवहितोत्तरत्वविशिष्टस्य ईकारस्य णुट् आगमः सिध्यत्येव ।

**अचीत्यस्यस्य षष्ठ्यन्तत्वेन विपरिणामे बीजप्रदर्शनम्** – 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इत्यनेन सूत्रेण अचः ङमुडागमः विधीयते तस्य च ङमुडागमस्य टित्त्वात् आद्यावयवः अयं ङमुडागमो भवति । किन्तु ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्य अचि परतः ङमुडागमः इत्यर्थेऽपि पदावयवस्य ह्रस्वाव्यवहितोत्तरत्वविशि-ष्टस्य ङमो ङमुडागमविधानेऽपि कुर्वन्नास्ते इत्यादिप्रयोगाणां सिद्धिर्भवत्येव तर्हि किमर्थम् अचि इति सप्तम्यन्तस्य षष्ठ्यन्तत्वेन विपरिणामं कृत्वा परस्य आद्यवयवः अयं ङमुडागमः विधीयते इत्याकाङ्क्षायामुच्यते यत् परस्य आद्यवयवः ङमुडागमः न स्यात् तर्हि कुर्वन्नास्ते इत्यादौ पदान्तस्य इत्यनेन सूत्रेण णत्वनिषेधः न स्यात् । यतो हि कुर्वन्नास्ते इत्यादौ पदान्तः वर्तते चरमनकारः तस्य 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इत्यनेन प्राप्तणत्वस्य निषेधेऽपि पूर्वणकारस्य णत्वनिषेधो न स्यात् तस्य पदान्तत्वाभावाद् । अतः अत्र परस्यैव आद्यवयवः अनेन सूत्रेण बोध्यते तथा सति कुर्वन् इत्यत्र नकारस्य पदान्तत्वेन णत्वनिषेधः सिध्यति उत्तरस्य तु णत्वस्य प्राप्तिरेव नास्ति तस्य समानपदस्थत्वाभावात् अतः कुर्वन्नास्ते इत्यादौ णत्वनिषेधः सिध्यति । अत्रोच्यते – कुर्वन्नास्ते इत्यादौ णत्व-निषेधार्थं परस्य आद्यवयवत्वं नापेक्षितं, यतो हि यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इत्यनया परिभाषया आगमानां आगमिधर्मवैशिष्ट्यमपि बोध्यते । एवञ्च यदि ङमः एव ङमुडागमः क्रियते चेत् आगमी वर्तते कुर्व-न्नास्ते इत्यत्र नकारः आगमिवृत्तिधर्मः पदान्तत्वं तस्य आगममात्रे इत्युक्ते नकारे अतिदेशेन उभयोर्नकारयोर्णत्वनिषेधः सिध्यति तर्हि परस्य आद्यवयत्वं किमर्थं स्वीकृतमिति चेदुच्यते यत् 'ङमो ह्रस्वादचि ङमुण्नित्यम्' इति सूत्रभाष्ये ङम एव ङमुडागमः इत्यर्थे कुर्वन्नास्ते इत्यादौ भाष्ये दोषः उद्भावितः तादृशदोषोद्भावनपरकभाष्यप्रामाण्येन ङमो ह्रस्वादचि ङमुण्नित्यम् इत्येतत्सूत्रघटकस्य अचि इत्यस्य षष्ठ्यन्तत्वेन विपरिणामं कृत्वा अर्थः उपपादनीयः । तथा च भाष्यप्रामाण्याद् अच एव ङमुडागमः विधीयते । अत एव मनोरमा- कारेण उक्तम् – "ङमुटः परादित्वं कुर्वन्नास्ते इत्यत्र णत्वप्रतिषेधार्थम् । अत एव ङमो ह्रस्वादचि द्वे नासूत्रि ।"

अयं भावः – कुर्वन्नास्ते इत्यत्र णत्वस्य प्रतिषेधार्थमेव ङमो ह्रस्वादचि ङमुट् नित्यम् इत्यस्य सूत्रस्य स्थाने ङमो ह्रस्वादचि द्वे इति सूत्रं भगवता पाणिनिना न कृतम् । अन्यथा ङमो द्वित्वविधानेनापि अचि परतः कुर्वन्नास्ते सन्नच्युतः सुगण्णीशः इत्यादिप्रयोगाणां सिद्धौ सत्यामपि कुर्वन्नास्ते इत्यादौ णत्वनिषेधो न स्यात् । यतः परं णत्वं प्रति पूर्वस्य सिद्धतया अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन सूत्रेण णत्वापत्तेर्दुष्परिहरतया दोषः स्यादेव । अत्र प्राचीनाः ऊचुः यद् 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यनया परि- भाषया गतार्थत्वात् द्वयमपि असङ्गतम् । अर्थात् ङमुटः परादित्वं कुर्वन्नास्ते इत्यादौ णत्वप्रतिषेधार्थं एवञ्च ङमो ह्रस्वादचि द्वे इति सूत्रकरणे कुर्वन्नास्ते इत्यादौ णत्वापत्तिः स्यात् आपत्तिद्वयमपि 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यनया परिभाषया परिहर्तुं शक्यते । तथा प्राचीनैः

यत् समाधानं प्रदत्तं तदसङ्गतं दीक्षितेभ्यः न रोचते । यतो हि प्राचीनानां यत् समाधानं वर्तते तत् कार्यकाल-पक्षाभिप्रायेण यतो हि राज्ञः इत्यत्र यथोद्देशे त्रैपादिके अन्तरङ्गपरिभाषा न प्रवर्तते इत्यस्य स्वयमेव उक्तत्वेन प्राचीनैः यत् समाधानं प्रदत्तं तत् पाक्षिकमेव प्रतिभाति ।

**दीक्षितोक्तसूत्रार्थे दोषोद्भावनं तत्समाधानञ्च** - दीक्षितमते 'ङमो ह्रस्वादचि ङमुण्नित्य'मिति सूत्रस्य ह्रस्वात् परो ङम् तदन्तं यत् पदं तदव्यवहितोत्तरत्वविशिष्टस्य अचः नित्यं ङमुडागमः स्यात् अयम् अर्थः सम्पद्यते । परन्तु दीक्षितोक्तार्थस्वीकारे परमदण्डिनौ परमदण्डिना इत्यादौ ङमुडागमापत्तिः स्यात् । तथाहि परमश्चासौ दण्डी परमदण्डी तौ परमदण्डिनौ अत्र परमदण्डिन् औ इत्यवस्थायां समासे लुप्यमानायाः विभक्तेः 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यनेन सूत्रेण स्थानिवद्भावात् अन्तर्वर्तिनीं विभक्तिमाश्रित्य दण्डिन् इत्यस्य पदत्वात् ह्रस्वाव्यवहितोत्तरत्वविशिष्टः यो ङम् इत्युक्ते दण्डिन्घटकनकारः तदन्तं पदं दण्डिन् इतिपदं तदव्यवहितोत्तरत्वविशिष्टस्य अचः औकारस्य नुडागमः स्यात् । एवञ्च परमदण्डिनौ इति रूपं न सिध्येत् । अपितु नकारद्वयघटितमेव रूपं सिद्ध्येत् । अतः परमदण्डिनौ परमदण्डिना इत्यादौ दोषवारणार्थं श्रीमता भट्टोजिदीक्षितेन अत्र 'उत्तरपदत्वे चापदादिविधौ' इति वार्त्तिकस्य प्रवृत्तिः कारिता । अनेन च वार्त्तिकेन 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यस्य सूत्रस्य निषेधः क्रियते । तेन अन्तवर्तिनीं विभक्तिमाश्रित्य दण्डिन् इत्यस्य पदत्वं वक्तुं न शक्यं तस्मात् परमदण्डिनौ परमदण्डिना इत्यादौ न ङमुडागमः । ननु 'उत्तरपदत्वे चापदादिविधौ' इति वार्त्तिकस्य कीदृशार्थः स्वीकृतः येन स्वीकृतार्थेन ङमुडागम-कर्तव्यतायां 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति सूत्रस्य निषेधः सिद्ध्यति इति चेत् उच्यते अपदादिविधौ उत्तरपदस्य पदत्वे कर्तव्ये प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रं न प्रवर्तते अयमेव वार्त्तिकार्थः । तथा च ङमो ह्रस्वादचि ङमुण्नित्यम् इत्यनेन सूत्रेण विधीयमानः यः ङमुडागमः सः पदादिविधिर्नास्ति । अतः अस्य ङमुडागमस्य अपदादिविधित्वात् अपदादिविधौ इत्युक्ते ङमुडागमविधौ उत्तरपदस्य दण्डिन् इत्यस्य पदत्वे कर्तव्ये प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रं न प्रवर्तते ।

**वार्त्तिकस्वीकारस्यावश्यकता** - एतद्वार्तिकस्वीकारादेव परमवाचौ इत्यत्र 'चोः कुः' इति सूत्रेण कुत्वं न भवति । अन्यथा परमा चासौ वाक् च तौ परमवाचौ अत्र परमवाच् औ इत्यवस्थायां चवर्गस्य कवर्गान्तादेशः स्यात् पदान्ते इत्यर्थकेन 'चोः कुः' इति सूत्रेण वाच्घटकचकारस्य स्थाने ककारः स्यात् । यतो हि अत्रापि परमवाचौ इत्यत्र कर्मधारयसमाससत्त्वात् समासे वाच्शब्दोत्तरम् उच्यमानायाः विभक्तेः प्रत्ययलोपे प्रत्ययलक्षणम् इत्यनेन सूत्रेण स्थानिवद्भावाद्वाच् इत्यस्य पदत्वेन पदान्ते स्थितस्य चोः कुः इति सूत्रेण कवर्गान्तादेशः स्यादेव परमवाचौ परम-वाचा इत्यादिप्रयोगाणां सिद्धिर्न स्यात् । यदि वार्तिकमिदं स्वीक्रियते तथा सति चोः कुः इत्यनेन सूत्रेण विधीयमानः कर्वगान्तादेशः पदान्तविधिर्वर्तते न तु पदादिविधिः । अतः अपदादिविधौ चोः कुः इत्यनेन सूत्रेण विधीयमाने कुत्व-विधौ उत्तरपदस्य 'वाच्' इत्यस्य पदत्वे कर्तव्ये प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रं न प्रवर्तते तथा च 'वाच्'

इत्यस्य पदत्वाभावात् चोः कुः इत्यनेन सूत्रेण कुत्वं न भवति इति वार्तिकस्वीकारस्य एकं प्रयोजनं द्वितीयन्तु परमश्चासौ गोधुक् तौ परमगोदुहौ । अत्र अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वात् दादेर्धातोर्घः इत्यनेन सूत्रेण हकारस्य स्थाने घत्वापत्तिः स्यात् । तथा च परमगोदुहौ परमगोदुहा परमगोदुहे इत्यादिप्रयोगाणां सिद्धिर्न स्यात् । अनेन च वार्त्तिकेन उत्तरपदस्य गोदुह् इत्यस्य पदत्वे कर्तव्ये प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रं प्रतिषिध्यते । अतः गोदुह् इत्यस्य पदत्वाभावात् दादेर्धातोर्घः इत्यनेन सूत्रेण घत्वं न प्रवर्तते इति द्वितीयं प्रयोजनम् । तृतीयं प्रयोजनं तु परमलिहौ परमश्चासौ लिट् इति परमलिह् तौ परमलिहौ अत्रापि अन्तर्वर्तिनीं विभक्तिमाश्रित्य लिह इत्यस्य पदत्वात् धात्ववयवस्य हस्य ढः स्यात् इत्यर्थकेन होढः इति सूत्रेण ढत्वं प्राप्तं तदपि न भवति । यतो हि उत्तरपदत्वे चापदादिविधौ इत्यनेन वार्त्तिकेन लिह् इत्यस्य उत्तरपदस्य पदत्वकर्तव्यतायां प्रत्ययलोपे प्रत्ययलक्षणम् इत्यस्य निषेधात् 'परमलिह् औ' घटकलिहित्यस्य पदत्वाभावात् 'हो ढः' इति सूत्रस्य प्रवृत्तिः न भवति । तेन च परमलिहौ इत्यत्र हो ढः इति सूत्रेण ढत्वं न भवति इति तृतीयं प्रयोजनम् । एवमेव वार्त्तिकस्वीकारस्य नैकानि प्रयोजनानि सन्ति अत्र दिङ्मात्रम् उदाहृतम् । तदुक्तं श्रीमता भट्टोजिदीक्षितेन प्रौढमनोरमायाम् –"ननु परमदण्डिनौ इत्यादौ अन्तर्वर्तिविभक्त्या पदत्वात् नुट् स्यात् इति चेत् न, उत्तरपदत्वे चापदादिविधौ इति प्रत्ययलक्षणप्रतिषेधात् । अत एव परमवाचौ परमगोदुहौ परमलिहौ इत्यत्र कुत्वढत्वघत्वादीनि न ।"

**प्राचीनोपदर्शितोपायखण्डनम्** – अथ च परमदण्डिनौ इत्यत्र ङमुडागमवारणोपायः प्राचीनैः यः प्रदर्शितः सोऽपि भट्टोजिदीक्षितेन प्रौढमनोरमायां खण्डितः । तथाहि परमदण्डिनौ इत्यादौ दोषवारणाय प्राचीनैः प्रक्रियाकौ-मुदीकारादिभिः उञि च पदे इत्यस्मात् सूत्रात् मण्डूकप्लुत्या अत्र सूत्रे पदे इत्यस्य अनुवत्तिः क्रियते । एवञ्च अचीत्यस्य सप्तम्यन्तत्वेन पदे अभेदेन विशेषणत्वाच्च अभेदसम्बन्धावच्छिन्नविशेषणताबोधकं यत् सप्तम्यन्तं पदं तत् तदादेर्बोधकं न तु तदन्तस्य इत्यर्थिकया यस्मिन्विधिस्तदादावल्ग्रहणे इत्यनया परिभाषया तदादिविधौ सति ह्रस्वात् परो यो ङम् तदन्तं यत् पदं तदव्यवहितोत्तरत्वविशिष्टस्य अजादेः पदस्य ङमुडागमः स्यात् अयमर्थः सूत्रस्य निष्पद्यते । एवञ्च परमदण्डिनौ इत्यादौ प्रत्ययलोपे प्रत्ययलक्षणम् इत्यनेन सूत्रेण 'दण्डिन्' इत्यस्य पदत्वेऽपि औ इत्यस्य अजादिपदत्वाभावात् ङमो ह्रस्वादचि ङमुट् नित्यम् इति सूत्रेण न ङमुडागमापत्तिः । यतो हि ह्रस्वात्परो यो ङम् इत्युक्ते ह्रस्वः दण्डिन्घटकः डकारोत्तरवर्त्ती: इकारः तदव्यवहितोत्तरत्वविशिष्टो यो ङम्पदबोध्यः नकारः तदन्तं पदम् अन्तर्वर्तिनीं विभक्तिमाश्रित्य दण्डिन् इति तदव्यवहितोत्तरत्वविशिष्टः औकारः वर्तते सः औकारः अजादि-पदसञ्ज्ञको नास्ति अतः परमदण्डिनौ इत्यादौ न ङमुडागमापत्तिः । अत्र परमदण्डिनौ इत्यत्र दोषवारणार्थम् उत्तर-पदत्वे चापदादिविधौ वार्तिकस्य प्रवृत्तिः न कार्या इति प्राचीनानामाशयः । एतत्प्राचीनमतं दीक्षितेन मनोरमायां खण्डितम् । प्राचीनमतं खण्डयतो दीक्षितस्य अयमभिप्रयायः – 'उञि च पदे' इत्यस्मात् सूत्रात् पदे इत्यनुवर्त्य तदादिविधौ अजादेः पदस्य ङमुडागमविधानेन परमदण्डिनौ इत्यत्र ङमुडागमाभावः यद्यपि साधयितुं शक्यते तथापि

यदि वार्त्तिकेन प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रस्य निषेधः न क्रियेत तथा सति परमदण्डिनौ इत्यत्रैव अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदसञ्ज्ञकत्वात् प्रातिपदिकसञ्ज्ञकं यत् पदं तदन्तस्य नस्य लोपः स्यात् इत्यर्थकेन 'नलोपः प्रातिपदिकान्तस्य' इत्यनेन सूत्रण नलोपः प्राप्तः । अतः तं प्राप्तं नलोपं वारयितुम् 'उत्तरपदत्वे चापदादिविधौ' इति वार्त्तिकेन 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति सूत्रस्य अवश्यं निषेधो वाच्यः । निषेधे सति दण्डिन्नित्यस्य पद-त्वाभावात् नलोपः वारितो भवति । एवञ्च यथा दण्डिन् इत्यस्य पदत्वाभावाय 'उत्तरपदत्वे चापदाविधौ' इति वार्त्तिकस्य प्रवृत्तिं स्वीकृत्य नलोपः वार्यते तथा तेनैव वार्त्तिकेन पदत्वनिषेधेन ङमुडागमाभावोऽपि सिद्धः । एवञ्च एकेनैव यत्नेन ङमुडागमाभावस्य नलोपाभावस्य च सिद्धत्वात् नलोपाभावाय वार्तिकप्रवृत्तेः ङमुडागमाभावाय उञि च पदे इत्यस्मात् सूत्रात् मण्डकप्लुत्या पदे इत्यनुवृत्तिश्चेति यत्नद्वयम् अनावश्यकमेव ।

**हरिदीक्षितमतेन सूत्रार्थविचारः** - 'ङमो ह्रस्वादचि ङमुट् नित्यम्' इति सूत्रविषये श्रीमता हरिदीक्षितेन इदं विचारितं यत् यदि ङमः इति षष्ठ्यन्तमेवास्तु । तथा सति अत्र अनुवर्तमानस्य पदपदस्य विभक्तिविपरिणामो न भवति इति लाघवम् । एवम् अचि इति सप्तमी अपि चरितार्था अतः ङम इत्यस्य षष्ठ्यन्तत्वम् अचि इत्यस्य सप्तम्यन्तत्वमेव स्वीकृत्य अर्थोऽस्तु । तथा सति सूत्रार्थः इत्थं सम्पद्यते - ह्रस्वात्परस्य पदावयवस्य ङमः अचि परे ङमुट् आगमः स्यात् । एवञ्च सन्नच्युतः इत्यादिप्रयोगाः सुतरां सिद्ध्यन्ति । किन्तु एवमर्थस्वीकारे दण्डिना इत्यादौ ङमुडागमापत्तिः यतो हि अत्र पदं वर्तते दण्डिना इति पदघटकः अच्पदबोध्यः डकारोत्तरवर्तीः इकारः तदव्यवहितोत्तरत्वविशिष्टः ङम्पदबोध्यः नकारः तस्य नुडागमः स्यात् आकाररूपाचि परतः । यदि अत्र दोषवारणाय 'उञि च पदे' इत्यस्मात् सूत्रात् मण्डूक्प्लुत्या पदे इत्यनुवर्त्यते तत्र च अचि इत्यस्य विशेषणत्वं स्वीक्रियते । तथा सति ह्रस्वाव्यवहितपरत्वविशिष्टः यः पदावयवः ङम् तस्य ङमुडागमः स्यात् अजादौ पदे इतिसूत्रार्थस्य निष्पद्य-मानतया दण्डिना इत्यत्र दोषः परिहर्तुं शक्यते । यतो हि अत्र ह्रस्वाव्यवहितपरत्वविशिष्टस्य ङम्पदबोध्यस्य दण्डि-न्घटकनकारस्य पदावयवत्वेऽपि आकारस्य अजादिपदत्वाभावेन न ङमुडागमापत्तिः । किन्तु तथार्थस्वीकारे 'नन्द-नानन्' इत्यत्र दोषः स्यात् । यतो हि टुनदि समृद्धौ इत्यस्मात् धातोः 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इत्यनेन सूत्रेण नन्दयति इति नन्दनः इति विग्रहे ल्युट्प्रत्यये कृते नन्दनशब्दो निष्पद्यते, तस्य च अन्प्रकृतिकशत्रन्तानन्शब्देन सह कर्मधारयसमासे नन्दनश्च अनन् च इति नन्दनानन् इति रूपं सिद्ध्यति । अत्र ङमन्तं पदमेकदेशविकृतन्यायेन नन्दन् इति, परादिवद्भावेन अजादिपदत्वं आनन् इत्यस्य वर्तते इति तस्मिन् परतः ङमन्तपदावयवस्य ङमो नकारस्य ङमुडागमः स्यात् । यद्यपि अयं दोषः दीक्षितमतेऽपि तदवस्थ एव । यतो हि दीक्षितमते पूर्वोक्तरीत्या सूत्रार्थः प्रति-पादितः । नन्दन इत्यत्र दकारोत्तरवर्त्ती: अकारः ह्रस्वपदबोध्यः तदव्यवहितोत्तरत्वविशिष्टो यो ङम् नकारः तदन्तं पदं नन्दन् इति पदं तदव्यवहितोत्तरत्वविशिष्टाचः अकारः तस्य ङमुडागमः स्यात् । एवञ्च दीक्षितमतेऽपि अत्र दोषः अस्त्येव । यदि अत्र दोषवारणाय पदस्य इत्येतद् पदपदार्थे ङमन्ते पदे इत्येतत् पदार्थनिमित्तकपदत्वमतभेदोऽपि

विवक्षितः इत्युच्यते तदा हरिदीक्षितमते दीक्षितमते च न दोषः इति हरिदीक्षिताभिप्रायः । किञ्च परमदण्डिनौ इत्यत्र ङमुड्वारणोपायः यः भट्टोजिदीक्षितेन प्रदर्शितः तदुपायः हरिदीक्षितेभ्यः न रोचते । तत्र रत्नकारः ब्रवीति यत् उत्तर-पदत्वे चापदादिविधौ इत्येतद् वार्त्तिकघटकापदादिविधिशब्दः समस्तः । अत्र नञ्समासो वर्तते । स च लाघवात् पर्युदासः एव स्यात् । एवञ्च पदादिविधिभिन्नपदादिविधिसदृशविधौ उत्तरपदस्य पदत्वे कर्तव्ये प्रत्ययलोपे प्रत्यय-लक्षणम् इति सूत्रं न प्रवर्तते इति वार्त्तिकस्य अर्थः स्यात् । अयं भावः - पदादिविधिश्च पदादित्वनिमित्तक इति तत् सादृश्यात् तद्भिन्ने तत्सदृशे विधौ उत्तरपदस्य पदत्वे कर्तव्ये प्रत्ययलोपे प्रत्ययलक्षणं न भवति । तत्र सादृश्यञ्च पदविशिष्टधर्मावच्छिन्ननिमित्तकत्वेन । वैशिष्ट्यञ्च स्वघटकवृत्तित्वस्वघटकाव्यवहितोत्तरत्वाभाववत् स-मानाधिकरण्योभयसम्बन्धेन ।

पदादित्वे पदघटकाव्यवहितपूर्वत्वसामानाधिकरण्येऽपि स्वघटकाव्यवहितोत्तरत्वसामानाधिकरण्यं नास्ति । पदा-न्तत्वे पदघटकाव्यवहितोत्तरत्वसामानाधिकरण्यस्य सत्त्वेऽपि स्वघटकाव्यवहितपूर्वत्वसमानाधिकरण्यं नास्ति इति एक-सत्त्वे द्वयन्नास्ति इति न्यायेन उभयं नास्ति इति रीत्या उभयत्र उभयाभाव - समानाधिकरण्यं समागतम् । अतः अत्र लाघवात् पर्युदास एव स्यात् किन्तु पदादिविधिभिन्नपदादिविधिसदृशविधिः पदान्तविधिः । अतः ङमो ह्रस्वादचि ङमुण्नित्यम् इत्यनेन सूत्रेण विधीयमानस्य ङमुडागमस्य पदान्तविधित्वाभावात् अत्र वार्त्तिकस्य प्रवृत्तिः न स्यात् । किञ्च यदि उच्यते यत् पदादिविधिभिन्नः पदादिविधिसदृशविधिः यथा पदान्तविधिः तद्वत् वर्णोद्देश्यकविधिरपि भवति तथा च ङमो ह्रस्वादचि ङमुण् नित्यम् इत्यनेन सूत्रेण विधीयमानस्य ङमुडागमस्य पदान्तविधित्वाभावेऽपि वर्णोद्देश्यकविधित्वात् अत्र वार्त्तिकस्य प्रवृत्तिः भवत्येव अतः अत्र न दोषः । किन्तु अपदादिविधौ इत्यत्र पर्युदास-स्वीकारे शब्दरत्नग्रन्थविरोधः स्यात् । यतो हि रत्नकृता माषकुम्भवापेन इत्यत्र पदव्यवायेऽपि इत्यनेन सूत्रेण णत्व-निषेधार्थम् उत्तरपदस्य कार्यित्वे एव प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रं न प्रवर्तते इत्युक्तम् । अर्थात् उत्तरपदत्वे कार्यित्वनिवेशः कृतः तन्न सङ्गच्छते । यतो हि माषकुम्भवापेनेत्यत्र 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यनेन सूत्रेण विधीयमानस्य णत्वस्य पदव्यवायेऽपि इति सूत्रेण णत्वनिषेधसिध्यर्थम् उत्तरपदत्वे कार्यित्वनिवेशः कृतः । यदि च अपदादि- विधौ इत्यत्र पर्युदासः स्वीक्रियेत तथा सति पदान्तत्वनिमित्तकविधौ एव उत्तरपदस्य पदत्वे कर्तव्ये प्रत्ययलोपे प्रत्ययलक्षणं न प्रवर्तते अयमर्थः स्यात् । तथा च 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यनेन सूत्रेण विधीय-मानस्य णत्वस्य पदान्तत्वनिमित्तकत्वाभावेन वार्त्तिकस्य अप्रवृत्या 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यनेन कुम्भशब्दस्य पदत्वात् तद्व्यवाये पदव्यवायेऽपि इति सूत्रेण णत्वनिषेधः स्यात् एवेति णत्वनिषेधार्थं रत्नकृता यत् कार्यित्वनिवेशः कृतः सः व्यर्थः स्यात् । अतः अत्र अपदादिविधौ इत्यत्र पदादिविधिभिन्नः पदादिविधिसदृशः अर्थात् पदान्तविधौ एवञ्च उत्तरपदस्य पदत्वे कर्तव्ये प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रं न प्रवर्तते एवमर्थः वक्तुं न शक्यते । किञ्च यदि अपदादिविधौ इत्यस्य पदान्तविधौ अयमेवार्थः अभीष्टः स्यात् तर्हि उत्तरपदत्वे च पदान्तविधौ इति वार्त्तिककृता

इदमेव वार्त्तिकमुक्तं स्यात् । अस्मिन् वार्त्तिके च पूर्ववार्त्तिकापेक्षया लाघवमपि भवति तत्र समासस्य पदव्यवायस्य च ग्रहणं न कर्तव्यम् । किञ्च मात्राकृतलाघवमपि अस्ति अतः पर्युदासस्वीकारे उत्तरपदत्वे चापदादिविधौ इत्यस्य स्थाने उत्तरपदत्वे च पदान्तविधौ इति वार्त्तिकमेव विरचितं स्यात् । तथा न कृतं तेन ज्ञायते यद् अत्र पर्युदासः रत्नकारस्य नाभीष्टः अपितु पदान्तविधिभिन्ने विधौ उत्तरपदस्य पदत्वे कर्तव्ये प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रं न प्रवर्तते इत्येवार्थोऽभिप्रेतः । पदादिविधिभिन्नविधिः यथा पदान्तविधिः तद्वत् वर्णोद्देश्यकविधिरपि भवति इति कृत्वा अत्र माषकुम्भवापेन इत्यत्र प्रातिपदिकान्तनुम्विभक्तिषु च इत्यनेन सूत्रेण विधीयमानस्य णत्वस्य वर्णनिमित्तकत्वेन वर्णोद्देश्यकत्वेन अत्र प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रेण लुप्यमानप्रत्ययस्य स्थानिवद्भावे कर्तव्ये उत्तरपदत्वे चापदादिविधौ इति वार्त्तिकस्य प्रवृत्तिः स्यात् । तस्य प्रवृत्तिर्मा भूत् इत्यतः रत्नकारेण उत्तरपदे कार्यित्वनिवेशः कृतः। एवञ्च अत्र उत्तरपदस्य माषशब्दस्य कार्यित्वाभावात् उत्तरपदत्वे चापदादिविधौ इति वार्त्तिकस्य प्रवृत्तिर्न भवति । तेन प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रस्य निषेधाभावात् लुप्यमानविभक्तेः स्थानिवद्भावसत्त्वात् कुम्भशब्दस्य पदत्वेन पदव्यवायेऽपि इति णत्वनिषेधः सिध्यति । अत्र परमपदण्डिनौ इत्यत्र उत्तरपदत्वे चापदादिविधौ इति वार्त्तिकेन तु निर्वाहः भवितुं नार्हति । यतो हि परमदण्डिनौ इत्यत्र उत्तरपदं दण्डिन् इति तस्य कार्यित्वं नास्ति । अतः कार्यित्वाभावात् उत्तरपदस्य दण्डिन् इत्यस्य उत्तरपदत्वे चापदादिविधौ इत्यनेन वार्त्तिकेन प्रत्ययलोपे प्रत्ययलक्षणम् इत्यस्य सूत्रस्य निषेधाभावात् दण्डिन् इत्यस्य पदत्वं स्यादेव । अतः दीक्षितमते ङमुडागमापत्तिः तदवस्था । किञ्च नलोपः प्रातिपदिकान्तस्य इत्यनेन सूत्रेण नलोपकर्तव्यतायां तु उत्तरपदत्वे चापदादिविधौ इति वार्त्तिकस्य प्रवृत्तिः भवत्येव । यतो हि नलोपः प्रातिपदिकान्तस्य इत्यनेन सूत्रेण परमदण्डिना इत्यत्र यः नलोपः क्रियते सः नलोपः उत्तरपदसम्बन्धी एव वर्तते । एवञ्च परम्परया उत्तरपदस्य दण्डिन् इत्यस्य कार्यित्वमस्त्येव, अतः कार्यित्वविशिष्टस्य उत्तरपदस्य दण्डिन् इत्यस्य पदत्वे कर्तव्ये प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रस्य प्रवृत्तिः न स्यात् । अतः नलोपकर्तव्यतायां वार्त्तिकस्य प्रवृत्तिर्भविष्यति । ङमुडागमकर्तव्यतायां वार्त्तिकस्य प्रवृत्तिर्न भविष्यति इति कृत्वा परमदण्डिनौ इत्यत्र दोषः तदवस्थ एव । तस्मात् प्राचीनैः परमदण्डिना इत्यत्र दोषवारणार्थम् उञि च पदे इत्यस्मात् सूत्रात् मण्डूकप्लुत्या पदे इत्यनुवर्त्य तस्य अचि इत्यस्य विशेषणतासम्बन्धेन अन्वयात् यस्मिन्विधिस्तदादावल्ग्रहणे इत्यनया परिभाषया तदादिविधौ ह्रस्वात् परो यो ङम् तदन्तं यत् पदम् अजादेः पदस्य नित्यं ङमुडागमः अयमर्थः स्वीकृतः । स्वीकृतार्थेन च परमदण्डिनौ परमदण्डिना इत्यत्र दोषः वारितः । सः उपायः सम्यगेव प्रतिभाति ।

**शेखरकाराणां मतम्** - 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इति सूत्रविषये नागेशः स्वमतमुपस्थापयन् लघुशब्देन्दुशेखरे उद्योतग्रन्थे च प्रथमं दीक्षितमतमनूद्य तदनन्तरं वस्तुतस्तु इत्यादिना स्वमतं प्रतिपादितवान् । तथाहि पूर्वम् अस्माभिः सम्यक् विवेचितं यत् दीक्षितेन ह्रस्वात् परो यो ङम् तदन्तं यत् पदं तस्मात् परस्य अचः नित्यं ङमुडागमः स्यात् अयमर्थः स्वीकृतः । तत्र अमुमर्थ स्वीकुर्वतां भट्टोजिदीक्षितानां कोऽभिप्रायः इत्यत्र भट्टनागेशः

ब्रवीति यत् ङमो ह्रस्वादचि ङमुण् नित्यम् इति सूत्रे पदस्य इत्येतत् अधिक्रियमाणमस्ति । तच्च ङमिति पञ्च-म्यन्तपदसामानाधिकरण्यानुरोधात् पञ्चम्यन्तत्वेन विपरिणम्यते । अथवा ङम्पदार्थेन साकं पदपदार्थस्य अभेदसम्बन्धेन अन्वयः । एवञ्च अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकं पदं तदन्तस्य सञ्ज्ञा इत्यर्थकेन येन विधिस्तदन्तस्य इत्यनेन सूत्रेण तदन्तविधौ ङमन्तं यत् पदम् अयमर्थो लभ्यते । तत्र पदार्थविवेचनक्रमः दीक्षितस्य कः इति चेत् तत्र ह्र-स्वपदबोध्यस्य स्वाव्यवहितोत्तरत्वसम्बन्धेन ङम्पदार्थे अन्वयः पुनः ङम्पदार्थस्य पदपदार्थे अभेदसम्बन्धेन अन्वयः । अतः ह्रस्वात्परो यो ङम् तदन्तं यत्पदम् इत्यस्मात् दीक्षितः तत्र सकृदुच्चरितेन पदेन प्रतिपादितार्थस्य अन्येन केनचित् एकेनैव पदार्थेन तत्कालावच्छेदेन अन्वयो भवति, न तु अन्यान्यपदार्थेन साकम् । अधुना अयं ङम्पदार्थः ह्रस्वपदार्थेन साकमन्वेति पदपदार्थेन साकमपि अन्वेति तर्हि एकस्य ङम्पदार्थस्य अन्यान्यपदार्थेन साकं युगपत् अन्वयः कथं सङगच्छते इत्याकाङक्षायां लघुशब्देन्दुशेखरे भट्टनागेशेन उक्तं यत् "तत्र ङम् स्वयं ह्रस्वादिति विशेषणसम्बन्धमनुभूय पदविशेषणत्वेन तदन्तपरः इति भावः" अस्य शेखरग्रन्थस्य अयमभिप्रायः पूर्वं ह्रस्वपद-बोध्यस्य पदार्थस्य ङम्पदार्थे अन्वयो जातः तदनन्तरं ङम्पदार्थस्य अन्यकालावच्छेदेन पदपदार्थे अन्वयोऽस्ति । अतः एककालावच्छेदेन च एकपदार्थस्य एकस्मिन् पदार्थे एव अन्वयः इति नियमविरोधो नास्ति । अत्र अन्यकाला-वच्छेदेन ह्रस्वपदार्थस्य पदपदार्थेऽन्वयस्वीकाराद् अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वं ङम्पदार्थस्य वरीवर्त्येव । अतः दीक्षितेन यः अर्थः उपपादितः स अर्थः सङ्गत एव । अत्र ङमिति पञ्चम्यन्तं पदं वर्तते तदनुरोधात् उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् इत्यनया परिभाषया पञ्चमीनिर्दशस्य बलवत्त्वबोधनात् अचि इति सप्तमी षष्ठ्यर्थे वर्तते इति लाघवात् प्रागपि मया दीक्षितमतप्रदर्शनावसरे प्रतिपादितम् । तत्र ङमः इति पञ्चम्यन्तमेव पदमस्ति षष्ठ्यन्तं नास्ति इत्यत्र किं मानम् इत्याकाङक्षायाम् उच्यते तस्मिन्निति निर्दिष्टे पूर्वस्य इति सूत्रभाष्ये भगवता भाष्यकृता ङमः परस्य अचः ङमुडागमः अयमर्थः स्वीकृतः । अनेन भाष्यप्रामाण्येनैव ङमः इत्यस्य पञ्चम्यन्तत्वं स्वीकर्तव्यम् । तत्र यदि अस्मिन् सूत्रे पदस्य नाधिकृतं स्यात् तर्हि ह्रस्वात् परो यो ङम् तस्मात् परस्य अचः ङमुडागमः अयमर्थः स्यात् । तथा च अदादिगणे पठिताद् अन्धातोः तिप्प्रत्यये कृते अनिति रूपम् । अत्र ह्रस्वपदबोध्यः अकारः तदव्यवहितोत्तरविशिष्टः ङम्पदबोध्यः नकारः तदव्यवहितपरत्वविशिष्टाच्पदबोध्यः इतिशब्द-घटकः इकारः तस्यापि नुट् आगमः प्रसज्येत । अतः पदस्य इत्यस्य अत्र सूत्रे अवश्यमधिकारः कर्तव्यः । तथा च अन इत्यस्य पदत्वेऽपि ङमन्तपदत्वाभावात् न ङमुडागमः इति दीक्षिताभिप्रेतार्थं प्रतिपाद्य शेखरकारः ब्रवीति यद् अधिक्रियमाणस्य विभक्तिविपरिणामं कृत्वा पदादित्यनेन सामानाधिकरण्यानुरोधात् यदर्थवर्णनं कृतं, तन्न समीचीनं, यतो हि तथार्थकरणे अर्थात् विभक्तिविपरिणामे गौरवं वर्तते । अतः गौरवभिया विभक्तिविपरिणामो न युक्तः अपितु ङमः इति षष्ठ्यन्तमव अस्तु पदस्य इत्यपि षष्ठ्यन्तमेव अस्तु । एवञ्च ह्रस्वात्परः पदावयवः यः ङम् तस्मात्परस्य अचः ङमुडागमः अयमेव अर्थोस्तु । तावतापि सकलेष्टसिद्धिः सम्भवति । तथाहि सुगण्णीशः इत्यत्र

ह्रस्वात् परः पदावयवः ङम् णकारः तदव्यवहितोत्तरत्वविशिष्टः अच् अकारः तस्य णुडागमनेन सुगण्णीशः इति प्रयोगः सिद्ध्यति परन्तु तथा अर्थस्वीकारे अनिति इत्यत्र नुडागमापत्तिः । तथाहि पदमस्ति अनिति पदावयवः यः ङम् पदबोध्यः नकारः सः ह्रस्वाव्यवहितोत्तरत्वविशिष्टोऽपि अस्ति अतः तस्मात् परस्य अचः अकारस्य ङमुडागमः स्यात् अतः ङमित्यस्य षष्ठ्यन्तत्वे भाष्यप्रामाण्यात् नागेशभट्टेन यत् उपपादितं तन्न समीचीनम् इत्याकाङ्क्षायाम् उच्यते यत् अत्र एतादृशेषु सर्वेष्वपि लक्ष्येषु अतिव्याप्तिवारणार्थम् 'उञि च पदे' इत्यस्मात् सूत्रात् पदे इत्यस्य मण्डूप्लुत्या अनुवृत्तिरेव क्रियते । एवञ्च 'अचि' इत्यस्य पदे अभेदसम्बन्धेन विशेषणात् तदादिविधौ ह्रस्वात्परः पदावयवः ङम्पदबोध्यः यः तदव्यवहितोत्तरत्वविशिष्टस्य अजादेः पदस्य ङमुडागमः स्यात् । तथा 'अनिति' इत्यत्र इति इत्यस्य अजादिपदत्वाभावात् ङमुडागमः न । न वा दण्डिना इत्यादौ ङमुडागमापत्तिः ।

**नागेशभट्टोजिदीक्षितमतयोर्विवेकः** – किन्तु विद्वद्भिः विचारणीयं यत् नागेशमते विभक्तिविपरिणामो नास्ति किन्तु 'उञि च' इत्यस्मात् सूत्रात् मण्डूकप्लुत्या पदे इत्यस्य अनुवृत्तिः आवश्यकी अनिति दण्डिना इत्यादौ दोषवारणार्थं दीक्षितमते यद्यपि विभक्तिविपरिणामोऽस्ति तथाहि अनिति दण्डिना इत्यादौ अन् इत्यस्य दण्डिन् इत्यस्य वा ङमन्तपदत्वाभावात् ङमुडागमः न प्राप्तः अतः तद्वारणार्थम् उञि च पदे इत्यस्मात् सूत्रात् मण्डुकप्लुत्या पदे इत्यस्य अनुवृत्तिः नावश्यकी । एवञ्च नागेशमते ङमः इत्यस्य षष्ठ्यन्तत्वपक्षस्वीकारे पदे इत्यस्य अनुवृत्तिः, दीक्षितमते च विभक्तिविपरिणामः इति उभयोः मतयोः साम्यात् कथं दीक्षितमते गौरवं नागेशमते लाघवमिति प्रतिपादयितुं शक्यते । तत्रोच्यते यद्यपि तत्तत्सूत्रेषु विभक्तिविपरिणामः क्लृप्तः । अतः केवलं विभक्तिविपरिणाम-रूपगौरवं दीक्षितमते नास्ति अपितु परमदण्डिना इत्यत्र दोषवारणार्थं दीक्षितेनापि उञि च पदे इत्यस्मात् सूत्रात् पदे इत्यस्य अनुवृत्तिः कर्तव्या एव । तथा सति दीक्षितमते विभक्तिविपरिणामः अनिति इत्यत्र पदे इत्यस्य अनुवृत्तिः इत्येतद्द्वयं कल्पनीयं भवति । नागेशमते तु पदे इत्यस्य अनुवृत्तिरेव कल्पनीया भवति इति कृत्वा नागेशमते लाघवं वर्तते दीक्षितमते गौरवम् । ननु दीक्षितमतेऽपि उञि च पदे इत्यस्मात् सूत्रात् पदे इत्यस्य अनुवृत्त्यैव अनिति इत्यत्र न दोषः न वा परमदण्डिना इत्यत्र दोषः इति दीक्षितमतेऽपि अनुवृत्तिमात्रमेव अस्तु तथा सति न गौरवम् इति चेत् उच्यते इष्टापत्तिः, तदेव नागेशः ब्रवीति यत् दीक्षितेनापि यदि अनुवृत्तिः क्रियेत तथा सति विभक्तिविपरिणामः नावश्यकः इत्यस्य षष्ठ्यन्तत्वेऽपि ह्रस्वात्परः पदावयवः ङम्पदबोध्यः यः तदव्यवहितोत्तरत्वविशिष्टस्य अजादेः पदस्य ङमुडागमः इत्यर्थकेन अनिति इत्यत्रापि दोषः दण्डिना इत्यत्र च न दोषः परमदण्डिना इत्यादौ अपि नैव दोषः । अतः दीक्षितेनापि अयमेव पन्थाः अनुसर्तव्यः । तस्मात् नागेशमतमेव सङ्गतं प्रतिभाति ।

अत्र च परमदण्डिनौ परमदण्डिना इत्यत्र दोषवारणार्थं भट्टोजिदीक्षितेन उत्तरपदत्वे चापदादिविधौ इति वार्त्तिकस्य या प्रवृत्तिः कारिता प्रवृत्त्या च दोषः वारितः । स दोषवारणोपायः रत्नकारेभ्यः नागेशभट्टेभ्यश्च न रोचते । तथा चोक्तं नागेशेन उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधस्तु न माषकुम्भवापेन इत्यादौ पदव्यवायेऽपि इति

निषेधसिद्धये, तस्य यत्र उत्तरपदस्य कार्यित्वं तत्रैव प्रवृत्तेः । अतः परदण्डिनौ इत्यत्र दण्डिन् इत्यस्य कार्यित्वा-भावेनैव वार्तिकेन प्रत्ययलोपे प्रत्ययलक्षणम् इति सूत्रेण अनिषेधात् ङमुडागमापत्तिः वारयितुं न शक्यते । तस्मात् उञि च पदे इत्यस्मात् सूत्रात् पदे इत्यनुवृत्तिः कर्तव्या एव भवति । किन्तु अत्र नागेशमते एका आपत्तिः वर्तते यत् भाष्यकृता तेन निषेधेन सिद्धम् इति ङमो ह्रस्वादचि ङमुण् नित्यम् इति सूत्रभाष्ये उक्तम् । अधुना तेन निषेधेन उत्तरपदस्य चापदादिविधौ इत्यनेन निषेधेन ङमुडागमः सिद्धः अयमर्थः सिद्धः । यदि उञि च पदे इत्यस्मात् सूत्रात् पदे इत्यनुवत्तिः क्रियेत तथा सति परमदण्डिनौ इत्यत्र अजादिपदत्वाभावादेव ङमुडागमः न प्राप्तः । अतः प्राप्तौ सत्यां निषेधः इति कृत्वा तेन निषेधेन सिद्धम् इति वदतां भाष्यकारणां वचनं विरुद्धयेत । अतः उञि च पदे इत्यस्मात् सूत्रात् पदे इत्यनुवृत्तिः अप्रामाणिकी प्रतिभाति इति चेत् नागेशः इत्थं समाधत्ते यत् तन निषेधेन सिद्धम् इत्येतद् सूत्रस्थभाष्योक्तिस्तु एकदेशिन एव अर्थात् एकदेशिभाष्यमिदं न सिद्धान्तभूतम् । यतो हि उञि च पदे इत्येतत्सूत्रव्याख्यानप्रसङ्गे भगवता भाष्यकृता पदे इति किम् तन्त्रे युतम् इत्यत्र दोषः प्रदर्शितः । तदनन्तरं पुनः लक्षणप्रतिपदोक्तयाः प्रतिपदोक्तस्यैव ग्रहणम् इत्यनया परिभाषया दोषः वारितः । तदनन्तरं पूर्वपक्षिणा प्रश्ने पृष्टे यत् पदे इति किमर्थं तर्हि यत् सिद्धान्तिना समाहितं पदे इत्युत्तरार्थम् । एवञ्च ङमो ह्रस्वादचि ङमुण् नित्यम् इत्यस्मिन् सूत्रे पदे इति गृह्यते । यदि पदे इत्यस्य अनुवृत्तिः अप्रमाणिकी स्यात् तर्हि उञि च पदे इत्यस्मिन् सूत्रे भगवता भाष्यकृता पदे इत्युत्तरार्थमिति यदुक्तं तदसङ्गतं स्यात् । अतः तेन निषेधेन सिद्धम् इत्यस्यैव एकदेशिभाष्यत्वं स्वीकार्यम् ।

अथ पदे इत्युत्तरार्थम् इति भाष्यम् एकदेशिभाष्यम् अथवा तेन निषेधेन सिद्धम् इदं भाष्यं वा । अत्र विनिगमकाभावात् अन्यतरस्यापि भाष्यस्य एकदेशित्वं प्रतिपादयितुं शक्यते तर्हि नागेशस्यैव मतं भाष्यप्रामाण्यात् प्रमाणं दीक्षितस्य तु अप्रामाण्यमिति कथं निश्चेतुं शक्यते? तत्रोच्यते तेन निषेधेन सिद्धम् इति भाष्यमेव एक-देश्युक्तिः । यतो हि माषकुम्भवापेन इत्यत्र पदव्यवायेऽपि इति निषेधसिद्धयर्थं कार्यित्वनिवेश आवश्यकः । यदि कार्यित्वं निवेश्यते चेत् परमदण्डिनौ इत्यत्र दण्डिन् इत्यस्य उत्तरपदस्य कार्यित्वाभावात् अनेन वार्तिकेन प्रत्ययलोपे प्रत्ययलक्षणम् इत्यस्य सूत्रस्य निषेधः भवितुं नार्हति । तस्मात् तेन निषेधेन सिद्धम् इति भाष्यमेव एकदेशिनः । पदे इत्युत्तराथम् इदं भाष्यं तु सिद्धान्तभूतम् । अतः परमदण्डिनौ इत्यत्र दोषवारणार्थं पदे इत्यस्य अनुवृत्तिः कार्या इति नागेशमतमेव ज्यायः प्रतीयते ।

**सन्दर्भाः**

1. परिभाषेन्दुशेखरः, म. म. कै. तात्याशास्त्रिणा कृतेन भूतितिलकेन विभूषितः, प्रकाशकः - चौखम्बा सुरभारती प्रकाशन, पृष्ठसंख्या - 260 ।

2. अष्टाध्यायी, म. म. पण्डितराज डा. गोपालशास्त्री 'दर्शनकेशरी', सम्पादकः - प्रो. गोपालदत्तपाण्डेयः, प्रकाशकः -चौखम्बा सुरभारती प्रकाशन, 2015, सूत्रसंख्या - ७.१.१२, page no. - 82.
3. अष्टाध्यायी, म. म. पण्डितराज डा. गोपालशास्त्री 'दर्शनकेशरी', सम्पादकः - प्रो. गोपालदत्तपाण्डेयः, प्रकाशकः - चौखम्बा सुरभारती प्रकाशन, 2015, सूत्रसंख्या - ७.१.९, page no. - 82.
4. पाणिनीयव्याकरणमहाभाष्यम्, श्रीनागेशभट्टविरचितप्रदीपोद्योतभासितेन श्रीमदुपाध्यायकैयटप्रणीतेन भाष्यप्रदीपेन समुल्लसितम्, प्रकाशकः - चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली - 1987, द्वितीयखण्डः, Page no. - 18.
5. प्रौढमनोरमा अव्ययीभावान्ता, महामहोपाध्यायहरिदीक्षितकृतलघुशब्दरत्नमहामहोपाध्यायभैरवमिश्र–कृतशब्दरत्नप्रकाशिकासभापतिशर्मोपाध्यायकृतरत्नप्रभाटिप्पण्यलङ्कृता, प्रकाशकः - वाणी विलास प्रकाशन, दिल्ली - 2012, page no- -204.
6. वैयाकरणसिद्धान्तकौमुदी, श्रीस्वामिनारायणाश्रितैः श्रीकृष्णस्वरूपकाव्यतीर्थैः संशोधिता, प्रकाशकः - चौखम्भा पब्लिशर्स, वाराणसी, 2013, page no. 12, सूत्रसंख्या - 134.
7. वैयाकरणसिद्धान्तकौमुदी, श्रीस्वामिनारायणाश्रितैः श्रीकृष्णस्वरूपकाव्यतीर्थैः संशोधिता, प्रकाशकः - चौखम्भा पब्लिशर्स, वाराणसी, 2013, page no. 223, सूत्रसंख्या - २५०१ ।
8. पाणिनीयव्याकरणमहाभाष्यम्, श्रीनागेशभट्टविरचितप्रदीपोद्योतभासितेन श्रीमदुपाध्यायकैयटप्रणीतेन भाष्यप्रदीपेन समुल्लसितम्, प्रकाशकः - चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली - 1987, षष्ठः खण्डः, Page no. - 107.
9. परिभाषेन्दुशेखरः, म. म. कै. तात्याशास्त्रिणा कृतेन भूतितिलकेन विभूषितः, प्रकाशकः - चौखम्बा सुरभारती प्रकाशन, पृष्ठसंख्या - 48 ।
10. प्रौढमनोरमा अव्ययीभावान्ता, महामहोपाध्यायहरिदीक्षितकृतलघुशब्दरत्नमहामहोपाध्यायभैरवमिश्र–कृतशब्दरत्नप्रकाशिकासभापतिशर्मोपाध्यायकृतरत्नप्रभाटिप्पण्यलङ्कृता, प्रकाशकः - वाणी विलास प्रकाशन, दिल्ली - 2012, page no. - 205-206 ख
11. प्रौढमनोरमा अव्ययीभावान्ता, महामहोपाध्यायहरिदीक्षितकृतलघुशब्दरत्नमहामहोपाध्यायभैरवमिश्र–कृतशब्दरत्नप्रकाशिकासभापतिशर्मोपाध्यायकृतरत्नप्रभाटिप्पण्यलङ्कृता, प्रकाशकः - वाणी विलास प्रकाशन, दिल्ली - 2012, page no. -207.
12. Laghu shabdendu Shekhara of Nagesh Bhatt with rare commentaries, eñplanatory notes by Pt. Guru Prasada Shastri, Edited by Pt. Nandakishore Shastri, Published by Bhargava Pustakalaya, Varanasi, Ed. 1992, Page No. – 370 .

**सन्दर्भग्रन्थाः**

1. पाणिनीयव्याकरणमहाभाष्यम् ।
2. पाणिनीयमहाभाष्यप्रदीपोद्योतः ।
3. लघुशब्देन्दुशेखरः - षट्टीकोपेतः
4. परिभाषेन्दुशेखरः ।
5. प्रौढमनोरमा ।
6. वैयाकरणसिद्धान्तकौमुदी ।
7. शब्दकौस्तुभः ।
8. अष्टाध्यायी ।

**सहायकाचार्यः (व्याकरणविभागः)**
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
**एकलव्यपरिसरः**
**अगरतला (त्रिपुरा) ।**



# वर्णसमाम्नाये सन्धिविरहविषयकमतान्तरसमीक्षणम्

✍डॉ. यदुवीरस्वरूपशास्त्री

**(वर्णसमाम्नायपदेनात्र माहेश्वरसूत्रं ग्राह्यम् । परम्परायाञ्चेदमनादिभूतं छन्दोवत् । तथा हि 'छन्दसि दृष्टानुविधिरि'ति रीत्या यथा तस्य दृष्टत्वं तथानुविधिरवश्यमूहनीय इति कृत्वा शाब्दिकानां काचन महती विचारपरम्पराऽवलोक्यते । तां परम्परामधीत्य, विचिन्त्य, समीक्ष्य च प्रकृते निबन्धे विचार-निपुणो लेखकः पूर्वं तत्तन्मतमुल्लिख्य, तत्तस्य हार्दमुपस्थाप्य क्रमेण तत्तन्मते धीरधिषणया समीक्षणं प्रास्तौत् । संहिताया अविवक्षया सन्धिविरह इति च समर्थनमकार्षीत् ।)**

'अइउण्' इत्यादिषु, संहितानिवृत्त्यर्थं कतिपयशाब्दिकानां मतसमीक्षणपुरस्सरं विवेचनमुपक्रम्यते । तत्रादौ लक्ष्मीकृद्विवेचनं विधीयते । लक्ष्मीटीकाकृता श्रीमता सभापतिशर्मोपाध्यायेन अइउण् इत्यादिषु सन्धिवारणार्थं संहिताया अविवक्षा इत्यभिहितम् । तथा हि तद्ग्रन्थः - 'अइउण् इत्यादिषु सन्धिकार्यं न, संहिताया अविवक्षणात् ।[1]'

ननु कुत्र कः सन्धिः प्राप्नोति ? किं वा रूपं स्यात्सन्धावित्यपि विचारणीयम् । अ इ इत्यत्र 'आद्गुणः' इति प्रवृत्तौ 'ए' इति स्यात् । ततश्च ए उण् इत्यवस्थायाम् 'एचोऽयवायाव' इति अयादेशे 'अयुण्' इति प्रथम-सूत्रस्य स्वरूपं स्यात् । 'ऋलृक्' इत्यत्र तु 'अकः सवर्णे दीर्घः' इति प्रवृत्त्या 'होतॄकारः' इतिवत् 'ॠक्' इति स्यात् । एओङ्, ऐऔच् इत्यत्र तु 'एचोऽयवायावः' इत्यनेन क्रमेण अय्, आय् इत्यादेशे कृते 'अयोङ्', 'आयौच्' इति रूपं स्यात् । तथा च महेश्वरेण सन्धौ कृते अयुण्, ॠक्, अयोङ्, आयौच् इति सूत्रचतुष्टयस्य स्वरूपं स्यात्। किन्तु तथा उपदेशो न व्यधायि । कुत इति चेत् संहिताया विवक्षाभावादिति । सन्धिविरहविषये बहुभिः बहुधा वि-चारितम् । कैयटाद् आरभ्य लक्ष्मीटीकाकृत्पर्यन्तं सन्धिविरहविषये विविधविचाराः दृश्यन्ते । तत्र क्रमे रत्नाकरकृता कैयटमतमुपस्थापितं सन्धिविरहाय । लक्ष्मीकृता तु भट्टोजीदीक्षितमतमनूदितमिति । अत्रादौ रत्नाकरकृतो मतमुप-स्थाप्यते । महाभाष्ये 'अइउण्' इत्येतत्सूत्रस्य व्याख्यावसरे श्रीमता कैयटेन प्रथमतः संहिताविरहकारणं प्रति-पादितम् । तद्यथा - 'स्वरसन्धिस्तु न प्रवर्तते वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात्'[2]। अयं भावः-आदौ वर्णानाम् उपदेशः, तदुत्तरकाला इत्संज्ञा, तदुत्तरकालप्रत्याहारसिद्धिः, इत्यादि वर्तत क्रमः । तथा च 'अइउण्' इत्याद्युपदेश-काले अजादिप्रत्याहाराणां शक्तिग्रहाभावात् 'आद्गुणः' इत्यादिषु अच्पदार्थज्ञानाभावान्न तत्प्रवृत्तिः ।

'नाज्झलौ' इत्यादौ ग्रहणकशास्त्रस्य अप्रवृत्तित्वादिति प्रकटितश्चायम्भावः पदमञ्जरीकृता 'अथेह कस्मा-दाद्गुणादिकमच्कार्यं' न भवति ? उच्यते - अत्र च सत्यस्मिन् सन्निवेशे 'हलन्त्यम्' इत्यस्मिन् प्रवृत्ते आदिरन्त्ये-नेत्यनेनाच्संज्ञा निर्वर्त्यते, अतोऽस्मात्सन्निवेशात् प्रागकारादीनामच्त्वाभावात् तत्कार्याभावः[3] ।

ननु वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्त्तमानानां यणादीनां 'सुध्युपास्यः' रमेशः इत्यादौ तटस्थ इव उद्देश्यतावच्छेदकरूपाक्रान्ते वर्णोपदेशादावपि प्रवृत्तरावश्यकत्वात् । अन्यथा 'तुल्यास्यप्रयत्नम्' इत्यादौ उपर्युक्तरीत्या सवर्णदीर्घो न स्यात् । किञ्च अर्थवत्सूत्रान्तर्गतानां प्रातिपदिकत्वं 'प्रत्ययः', 'परश्च' इत्यादौ सुप्रत्ययः 'ङ्याप्प्रातिपदिकात्', 'द्व्येकयोर्द्विवचनैकवचने', 'बहुषु बहुवचनम्' इत्यादौ तत्तद्विभक्तिः, 'ससजुषोः' इत्यत्र रुः 'खरवसानयोः' इति सूत्रे विसर्गश्च न स्यादिति सर्वव्यवहारोच्छेदापत्तिः । तस्मात् स्वस्मिन्नपि यथा अत्र सर्वत्र प्रवृत्तिः, तथव अइउण् इत्यादावपि प्रवृत्तिः स्यादेव । वर्णोपदेशकालेऽजादिसंज्ञाऽनिष्पादनादिति कैयटकथनं न तावद्रुचिकरम् इति चत् कैयटाशयस्यात्रार्थे तात्पर्याभावाद् उपजीव्यविरोधान्न सन्धिरिति तात्पर्यसत्वात् । अत्रायमाशयः - उपजीव्यः - आलम्बनीयः (आश्रयभूतः) तस्य उपजीव्यस्य उपजीवकेन - आलम्बनकर्त्रा (आश्रितेन) विरोधः - विनाशो न कार्यः - नोचित इत्यर्थः । यथा - लोके कश्चित् स्वामी वर्तते, तस्य कश्चित् सेवको भवति । अत्र स्वामी उपजीव्यो भवति । सेवकश्च तद्द्वारा स्वजीवनं जीवति अतः असौ उपजीवकः । तेन स्व-स्वामिना विरोधः कस्मिन्नपि प्रसङ्गे न विधेय इत्यर्थः । तद्रीत्या शास्त्रेऽपि नोपजीव्यविरोधः कर्तव्यः । तथा च प्रकृतेऽपि अविकृताकारादिवर्णेषु 'आदिरन्त्येन सहेता' इति सूत्रेण अजादिप्रत्याहाराणां शक्तिर्बोधिता । इमामेव शक्तिमभ्युपगम्य 'आद्गुणः' इत्यादिसूत्राणां प्रवृत्तिः । यथा रमेशः गङ्गोदकम् इत्यादौ प्रवृत्तिः भवति, तथैव 'अइउण्' इत्यादिसूत्रेषु न भवति प्रवृत्तिः उपजीव्यविरोधात् । इत्थञ्च तुल्यास्यप्रयत्नमित्यादौ उक्तरीत्या उपजीव्य-विरोधाभावात् सर्वत्र दीर्घादीनि तत्तत्कार्याणि प्रवर्तन्त एव । एतत्सर्वं मनसि निधाय श्रीमता रामकृष्णभट्टेन निगदितं रत्नाकरे 'नन्वत्र सन्धिना भाव्यमिति चत्, सन्धिशास्त्रस्यैतदुपदेशकालेऽनुत्पन्नत्वात् स नेति कैयटः ।' तन्न, सन्धि-शास्त्रस्योत्पत्त्यनन्तरम् उद्देश्यतावच्छेदककोटिनिविष्टत्वेन रमेशो नायकः इत्यादौ प्रवृत्तिवदत्रापि तत्प्रवृत्तेदुर्वारत्वात् । अन्यथा तुल्यास्येत्यादौ सवर्णदीर्घः प्रातिपदिकसंज्ञा च न स्यादिति दीक्षिताः । तन्न, कैयटाशयानवबोधात् । उपजी-व्यविरोधात् सन्धिर्नेति तात्पर्यम् । तथा हि - सन्धिः स्यादिति वदता वर्णोपदेशकाले सन्धिरापाद्यते उत वर्णोपदे-शोत्तरं सन्धिशास्त्रे च निष्पन्ने तदुत्तरमिति । नाद्यः सन्धिशास्त्रस्यानुत्पन्नत्वादिति कैयट एव स्पष्टम् । न द्वितीयः, अविकृताकारादिवर्णेषु अजादिपदानां शक्तिः 'आदिरन्त्येन.....' इति शास्त्रेण क्लृप्ता । तथा च 'आद्गुणः' इत्यादोनां वर्णसमाम्नाये प्रवृत्तावुपजीव्यभूतशक्तिग्राहकमानविरोधापत्तेः। न हि सन्धौ सति अकारादीनामविकृतं रूपं सम्भवति। न च 'तुल्यास्य' इत्यादावुक्तरीत्या दीर्घो न स्यादिति वाच्यम् । शास्त्रीये पौर्वापर्येत्यानुपूर्व्यंशे उपजीव्योपजीवक-भावाभावात् सवर्णसंज्ञायास्तत्रोपजीव्यत्वात् ।[4]'

रत्नाकरकृतोऽयम्भावः - तुल्य+आस्य इत्यत्र 'अकः सवर्णे दीर्घः' इति सूत्रे सवर्णपदस्य शक्तिज्ञानं 'तुल्यास्यप्रयत्नं सवर्णम्' इति सूत्रेण बोध्यते । ततश्च तुल्यास्येत्यादिसूत्रम् उपजीव्यम् । 'अकः सवर्णे दीर्घः' इति उपजीवकम् । तेन च सवर्णदीर्घेन स्वोपजीव्यविरोधो न कर्तव्य इति । तत् सत्यं किन्तु सन्धौ सत्यपि आनुपूर्व्यंशे

क्षत्यभावात् नोपजीव्यविरोधः । एवमेवान्यत्र प्रातिपदिकम्, प्रत्ययः, ससजुषो रुः, खरवसानयोर्विसर्जनीयः इत्यादावपि उपजीव्यविरोधाभावः ऊहनीय इति ।

किञ्च 'तुल्यास्य' इत्यादौ सन्ध्यभावप्रतिपादनं नोचितम् । 'अकः सवर्णे दीर्घः' इत्यस्य उद्देश्यतावच्छेदककाटिप्रसिद्धेः पूर्वं 'तुल्यास्य....' इत्यादि सूत्राणाम् इत्यादौ यथेति । अपि च शब्दनित्यतावादपक्षे तु सन्धिविशिष्टमेव रूपं भवति । यतो हि प्रयुक्तानामन्वाख्यानमिति सिद्धान्तादिति । अतः उक्तरीत्या 'अइउण्' इत्यादावपि नित्यत्वपक्षे अविहतसन्धिके नाद्गुणः इति प्रवृत्तिः । यथा खलु तितउशब्दे न प्रवृत्तिः । अत्र हि 'आद्गुणः' इति सूत्रस्य उद्देश्यतावच्छेदककोट्यभावादिति । नन्वत्र अवर्णोत्तराच्परत्वमस्ति खलु । अतः उद्देश्यतावच्छेदकक्रान्तत्वमस्त्येवेति चेन्न । 'तितउः' इत्यत्र तु कृद्वृत्त्यर्थबोधनाय शब्दद्वयस्य च ज्ञापनाय अलौकिकावर्णोत्तराच्परकत्वं ज्ञेयम् । न तु लौकिकम् अवर्णोत्तरमच्परत्वम् । एवमेव 'अइउण्' इत्यादावपि अकारादिकारादिशब्दः न लौकिकोद्देश्यतावच्छेदककोटिप्रविष्टः अपितु अस्मादयं भिन्नः इति रीत्या शब्दविभाजकालौकिकघटकावर्णोत्तरमिकारपरत्वमिति । प्रपञ्चितश्चोपर्युक्तविषयो रत्नाकरकृता । तद्यथा 'यदप्युक्तम्-तुल्यास्य' इत्यादि, तदपि न । उद्देश्यतावच्छेदककाटिप्रसिद्धेः प्राक् 'तुल्यास्य ...' इत्यादिपरिनिष्ठितानुच्चारणप्रसङ्गात् अइउण् इत्यादिवत् । अथ नित्यशब्दे पक्षे तदुच्चारणं न दोषाय, प्रयुक्तानामनुशासनमिति सिद्धान्तादिति चेत्तर्हि अइउण् इत्यादावकृतसंधिके कथं तत्प्रवृत्तिः, तितउशब्दवदुद्देश्यतावच्छेदककोट्यप्रविष्टत्वात् । न हि अवर्णोत्तराच्परत्वादिकं तत् अतिप्रसङ्गात् । किन्तु वृत्त्यर्थप्रत्यायनाय प्रयुक्तशब्दविभाजकालौकिकघटकावर्णोत्तराच्परकत्वादिकमेव । इत्थञ्च 'तितउः' 'अइउण्' इत्यादौ तादृक् शब्दविभाजकालौकिकान्तराप्रसिद्धया 'विशेषणाभावप्रयुक्त......' इत्यादिन्यायेनेह तदभावात् तत्कोटिप्रवेशाभावे कथं सन्धिः प्रवर्ततामिति सुधियो विदां कुर्वन्तु । कार्यशब्दपक्षोऽपि प्राक्तनपक्षान्नात्यन्ताय भिद्यते । प्रवाहानादित्वन्यायात् । अत एव 'घढधष्', 'जबगडदश्' इत्यत्र षशोर्जश्त्वं न वक्ष्यमाणव्याख्याभेदेन पदान्तत्वसत्वात् । न च पाणिनिं प्रति तदनुपपत्तिः । तस्य त्वसंकेतितपदार्थवित्त्वात् । नापि तत्पठितान् आधुनिकान् प्रति, तदुक्तानुवादकत्वात्तेषां साधुत्वबोधविलम्बेऽपि शाब्दबोधे विलम्बादर्शनात् । सर्वज्ञोऽपि आचार्यः 'उपजीव्यविरोधोऽनुचित एव' इत्याधुनिकान् बुबोधयिषुर्नव्याभिमतोद्देश्यतावच्छेदकमङ्गीकृत्यापि सन्धिं नाकार्षीदित्यवधेयम् ।[5]

अपि च कैयटमतमुपस्थापनयन् भट्टरामकृष्णो निगदितवान् यत् यथा वर्णसमाम्नाये 'अणुदित्सवर्णस्य चाप्रत्यय' इत्यस्याप्यप्रवृत्तिः अइउणित्यादाविति । अत्र प्रसङ्गे अन्येऽपि पक्षा उपस्थाप्यन्ते ।

**उपायान्तरम्** - अइउण्, ऋऌक् इत्यादौ प्रत्येकं वर्णाद् अनुकार्यानुकरणयोः भेदविवक्षायां प्रातिपदिकत्वात् विभक्त्युत्पत्तौ, अकारादुत्तरस्याः सुविभक्तेः 'ससजुषोः रुः' इति रुत्वे 'भो भगो अघो अपूर्वस्य योऽशि' इति यत्वे, 'लोपः शाकल्यस्य' इति यलोपे, तस्यासिद्धत्वाच्च 'आद्गुणः' इति गुणो न भवति । 'हर इह' इतिवत् ।

अन्यत्र इकार-उकार-ऋकारात् परस्य छन्दोवत्सूत्राणि भवन्ति इति भाष्यकृद्वचनमादाय 'सुपां सुलुक्पूर्वसवर्णाच्छे.....' इत्यादिना सुप्रत्ययस्य लुकि सति, इकार-उकार-ऋकारस्य पदान्तत्वाद् 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इत्यनेन पदान्ता इकोऽसवर्णेऽचि परे प्रकत्या भवन्ति । तस्मान्नात्र सन्धिः । न च ऋलृक् इत्यत्र तु लृकारस्य सावर्ण्यात् न प्रकृतिभावः इति वाच्यम् । अत्रापि 'ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्' इति वार्त्तिकस्य गम्लृ, टुवेपृ इत्यादौ भिन्नभिन्नानुबन्धकरणज्ञापनात् अनित्यत्वम् । तस्मात् ऋकारात् लृकारः असवर्णः एवेति न काप्यनुपपत्तिः। 'ऋत्यकः' इति वा प्रकृतिभावः । ऐक्षु तु उक्तसमाधानं न भवितुमर्हत्यतः छान्दसत्वान्न सन्धिकार्यमिति वक्तव्यम् ।

उपर्युक्तविवेचनं शब्दकौस्तुभेऽपि कृतम् 'स्वरसन्धिना इह भाव्यम् । तत्र अ इत्यत्र विभक्तेः रुत्वयत्वलोपेषु 'वृक्ष इह' इत्यादाविव लोपासिद्ध्या सन्धिर्नेति समाधानेऽपि इकारस्य 'इकोऽसवर्णे' इति ऋकारस्य 'ऋत्यकः' इति प्रकृतिभावसम्भवेऽपि एदैतोरयायौ दुर्वारौ ।'[6] एदैतोरयायौ तु छान्दसत्वान्नेति ।

**समाधानान्तरम्** - लक्ष्मीकृतोक्तम् 'यद्वा अइउ इत्यादीनां स्वरत्वात् 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' इति चादिगणान्तर्गतसूत्रेण चादित्वबोधनेन निपातत्वात् 'निपातएकाजनाङ्' इति प्रगृह्यसंज्ञायाम् 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावेन सौत्रत्वेन वा सन्ध्यभावः ।'[7] एतच्च सन्ध्यभावसमाधानम् - तत्त्वबोधिनीकारेण, रत्नाकरकारेण कौस्तुभकृता, सिद्धान्तसुधानिधिकारेण, पदमञ्जरीकारेण, न्यासकारेण चाभिहिमिति ।

**समाधानान्तरम्** - सौत्रत्वान्न सन्धिरिति । इदञ्च उद्द्योतकृता अथ च लक्ष्मीकृतैवोक्तम् । सौत्रत्वान्नेत्यस्य अयम्भावः - सूत्रे एव सन्धिरहितप्रयोगो नान्यत्रेति सूत्रेषु भवं सौत्रमिति व्युत्पत्तिस्वीकारात् । अत्र विषये छायाकृता त्वित्थम्प्रोक्तम् 'अनेन सूत्रे एव तथा प्रयोगो नान्यत्रति सूचितम् । अन्यथा निपातनादिति वदेत् । एतेन छन्दोवदित्यतिदेशाद्विभक्तेर्लुगिति, चादिषु पाठेन निपातत्वेनाव्ययत्वाद् विभक्तेर्लुगिति चापास्तम् । वस्तुतः इयमेवानुपूर्वीका श्रुतिरेवेति सुपामिति लुगिति तत्त्वम् ।'[8]

**समाधानान्तरम्** - संहिताया अविवक्षणान्न सन्धिरिति ।

**संहितैकपदे नित्या, नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥**

एकपदे, धातूपसर्गयोः, समासे च संहिता नित्या भवति । किन्तु वाक्ये संहिता विवक्षाधीना भवति इति शिष्टकृतकारिकया विज्ञायते । न च एकपदत्वेनैव सिद्धेः समासग्रहणं निष्फलम् । ततश्च पुनरुक्तिदोषग्रस्तत्वान्न प्रमाणार्हमिति प्रलपनीयम् । समासस्य पृथग्ग्रहणं गोबलीवर्दन्यायेनेति ज्ञेयम् अतो न दोषः । न चास्याः कारिकायाः प्रामाण्याभाव इति भ्रमितव्यम् । इयं खलु प्राचां परिभाषा एकदेशानुमतिद्वारा संहिताधिकारेणैव ज्ञापिता । असंहितायां यणादिनिवृत्त्यर्थो हि संहिताधिकारः अत एव -

**हे रोहिणि त्वमसि शीलवतीषु धन्या एवं निवारय पतिं सखि दुर्विनीतम् ।**

**जालान्तरेण मम वासगृहं प्रविष्टः श्रोणीतटं स्पृशति किं कुलधर्म एषः ॥**

इति काव्ये धन्या एवमित्यस्य नासाधुता । असाधुत्वाभावादेव आलङ्कारिकैश्च्युतसंस्कृतित्वापेक्षया पृथगेव विसन्धिता नाम दोषान्तरमङ्गीकृतम् । तच्चेहास्तीत्यन्यदेतत् । न चैवमपि असंहितायां कालव्यवायेऽपि प्रवृत्तिं ज्ञापयितुं संहिताधिकारस्यारम्भादिति । तेन अग्निश्च विष्णुश्चेति अग्नाविष्णू इत्यत्र अवग्रहेऽपि 'देवता द्वन्द्वे च' इत्यनेन आनङादयः प्रवर्तन्त इति ।

अत्रेदं विचारणीयम् - अइउण् इत्यादिसूत्राणां कथं वाक्यत्वम् । यतो हि 'सुप्तिङन्तचये वाक्यम्' इति लक्षितवाक्यत्वस्य सर्वथात्राभावः । अतो वाक्यत्वाभावात् संहिताया अविवक्षेत्युक्तेरसङ्गत्यापत्तिः । न चात्र शक्तं पदम्, तत्समूहो वाक्यमित्यभियुक्तोक्तेरत्रापि वाक्यत्वमिति वाच्यम् तथा सति चक्रतुरित्यादावपि प्रकृतिप्रत्यययोः शक्तत्वेन तत्समूहस्य वाक्यत्वात् कदाचिद्यणभावप्रसङ्गादिति चेन्न । संहितैकपदेत्यभियुक्तोक्तौ वाक्यपदेनैकपदादि-त्रितयभिन्नसमुदायविवक्षणान्न दोषः इति । न च पदत्वाभाववदुत्तरखण्डत्वरूपस्य प्रातिपदिकसंज्ञावसरे वक्ष्यमाण-स्यात्र सत्त्वात् तद्भिन्नत्वाभावेन संहिताया नैयत्यापत्तिरिति वाच्यम् । प्रत्यासत्त्या पदत्वे सति पदत्वाभाववदुत्तर-खण्डत्वस्य विवक्षितत्वात् । अस्ति च राजीयतीत्यादौ, नास्ति च समासे इति तत्राभियुक्तोक्तौ समासग्रहणमावश्यक-मिति ।

**वाक्यत्वप्रतिपादनायोपायान्तरमपि** - तथा चोक्तम् 'अइउण्' इत्यादिसूत्राणाम् 'आदिरन्त्येन सहेता' इति सूत्रेण एकवाक्यतामात्रेण अइउण् इत्यादीनां वाक्यत्वं सुलभम्।'' वस्तुतस्तु शक्तं पदं तत्समूहो वाक्यमित्येव वाक्य-लक्षणं संहितापदे इत्यत्र वाक्यशब्देन विवक्षितम् । न चोपर्युक्तरीत्या चक्रतुः इत्यस्य वाक्यत्वात् यणभावप्रसङ्गः इति शङ्कनीयम् । शक्तस्य पदस्य च परिनिष्ठितस्य विवक्षणात् चक्रतुरित्यादौ न दोषः । अत एवैकपदधातूप-सर्गसमुदायस्य न वाक्यत्वप्रयुक्तः संहितानैयत्यप्रसङ्गः इति ।

अत्र ज्योत्स्नाकारोऽप्याह 'नन्वेवमपदत्वात्समुदाये वाक्यत्वाभावात् संहिताया अविवक्षोक्तेरसङ्गतिः, संहितैकपदे नित्या, नित्या धातूपसर्गयोः, नित्यासमासे वाक्ये तु सा विवक्षामपक्षते । इति वचनात् । न च शक्त-पदसमूह एव वाक्यं स्यात्, चक्रतुरित्यादावपि कदाचिद्यणभावप्रसङ्गादिति चेन्न । आदिरन्त्येनेत्यनेनैकवाक्यतायां गवित्ययमाहेत्यादाविव वाक्यत्वस्य सुवचत्वात् । संहितैकपदे इत्यत्र वाक्यशब्देनैकपदादिभिन्नसमुदायस्य विवक्षणा-दिति तात्पर्यात्[९]'। लक्ष्मीकृता तु - 'कारिकायां वाक्यपदेन एकपदसमासधातूपसर्गभिन्नो यः शिष्टोच्चरितशब्द-समुदायस्तस्य विवक्षितत्वात्, तादृशसमुदायत्वस्य अइउण् इत्यादावक्षतत्वात्'।

अत्र प्रसङ्गे संहिताया न विवक्षणान्न सन्धिः इत्यस्य रत्नाकरकृता खण्डनं विहितम् । तद्यथा - 'यत्तु संहिताविवक्षाविरहान्न यणादयः इति कौस्तुभेऽभिहितम् । तदसारम् । तितउः इत्यादावेकपदेऽपि तस्या अदर्शनात् विवक्षाविरहरूपस्य अगतिकगतित्वात् । महेश्वरेच्छाविरहोक्तेरयुक्तत्वाच्च । किञ्च तच्चाप्येक्ष्वव्यापकम् । विभक्ति-

श्रवणप्रसङ्गात् नपुंसकत्वाभ्युपगमे ह्रस्वापत्तेः, सौत्रत्वाङ्गीकारेऽतिगौरवाच्च । अथ समाहारद्वन्द्वं ब्रूषे यदि वा विभक्तिरहितसमुदायमनुकृत्य पदत्वम् । उभयथाऽपि हरिवचनं प्रतिकूलं नित्यत्वात् संहितायाः । अथ तादृगनुकृतावपदत्वम् । पदसमुदायाभावेन तद्वचनोपन्यासो व्यर्थ एव । सर्वस्यामपि संहितायामनुकार्यस्वरूपभङ्गापत्त्या कैयटीययुक्त्या च सन्ध्यप्रवृत्तिः सुवचा । न चैवमसाधुत्वम् अत एव गवित्ययमाह, भूसत्तायायम् इतीदृशं न प्रातिपदिकं नापि पदम् । साधु तु तत्स्मृतमिति तैरेव राद्धन्तयिष्यमाणत्वात् । ततश्च कैयटग्रन्थस्य दूषणम् अज्ञानविजृम्भितमेव तस्मादुपजीव्यविरोधान्न यणादिकम् इति दिक् ।[10]'

**उभयमतौचित्यविचारपूर्वकसारः** - वस्तुतस्तु संहितायाः विरहान्न सन्धिरित्येव साधीयान् उपायः । अन्ये चोपाया न तावन्मनोरमा इति। क्रमेणोपस्थाप्य निराक्रियन्ते -

**प्रथमोपायः** - अइउण् इत्यादिसूत्राणामुपदेशकल 'आद्गुणः' इत्यादिसन्धिशास्त्रस्याभावान्न सन्धिरिति । तन्न, तथा सति तुल्यास्यप्रयत्नमित्यत्र दीर्घो न स्यात् । यतो हि एतदुपदेशकाले 'अकः सवर्णे दीर्घः' इत्यस्याप्यनिष्पत्तिरिति । तथा चोक्तमुद्योत 'अजादिसंज्ञानामनिष्पादादिति तु चिन्त्यम्, वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां यणादीनां 'सुध्युपास्यः' इत्यादौ तटस्थ इवोद्देश्यतावच्छेदकाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेर्दुर्वारत्वात् । अन्यथा तुल्यास्यप्रयत्नमित्यादौ सवर्णदीर्घादि न स्यात् ।[11]'

**द्वितीयोपायः** - अइउण्, ऋलृक्, एओङ्, ऐऔच् इत्यादौ प्रत्येकं विभक्त्युत्पत्तौ, अकारात्परं रुत्वयत्वलोपे, यस्यासिद्धत्वे च न सन्धिः । अन्यत्र 'इकोऽसवर्णे' - ऋत्यकः इति प्रकृतिभावः । एओङ्, ऐऔच् इत्यत्र तु छान्दसत्वान्नेति । अयमुपायो न मनोहारी । एकत्रासिद्धत्वम्, अन्यत्र प्रकृतिभावः, अपरत्र च छान्दसत्वमिति अत्यन्तगौरवग्रस्तत्वात् ।

**तृतीयोपायः** - सौत्रत्वान्न सन्धिरित्यपि न तोषाय । अत्रेदं रहस्यम् - इका यणचीत्यत्र ङमुटमाशङ्क्य सौत्रत्वान्नेत्युक्तम् । तत्रापि संहिताया अविवक्षया न ङमुडिति कस्मान्नोक्तम् ? न च 'ङमो ह्रस्वादचि' इत्यत्र संहितायाम् इत्यधिकाराभाव इति वाच्यम् । 'तयोर्य्वावचि संहितायाम्' इत्यारभ्य संहितायामित्यधिकारस्य आऽध्यायपरिसमाप्तेः सत्त्वात् । तथा च तदेवात्र समाधानं युक्तम् एतदेव वा समाधानं तत्र युक्तमिति चेन्न । तत्र संहिताया अविवक्षणे सूत्रद्वयापत्तेः । पूर्वं संहितापठिताष्टाध्याय्याः संहिताया अविवक्षणेन सूत्रविभागस्य भाष्यकृता कृतत्वात् । अइउण् इत्यादौ संहिताया अविवक्षया प्रत्येकं सूत्रत्वेऽपि न क्षतिः । अत्वावच्छिन्नः साधुरित्वावच्छिन्नः साधुरित्यादिरीत्या वर्णसाधुत्वविधायकत्वेन प्रत्येकं सूत्रत्वस्येष्टत्वात् । एतदेव प्रकाशयितुं प्रकृते सौत्रत्वादिति समाधानं न वक्तुं शक्यते । अत एव इदं त्यक्त्वा नागेशादिभिः संहिताया अविवक्षया न सन्धिरिति समाधानमुक्तमिति ।

**चतुर्थोपायः** - स्वराणां चादिषु पाठात् 'चादयोऽसत्त्वे' इति निपातसंज्ञायां 'निपात एकाजनाङ्' इति प्रगृह्यत्वे प्रकृतिभावान्न सन्धिरिति । एतत्सन्ध्यभावे समाधानं भवितुमर्हति । तथापि मन्ये दधि + अश्व =

दध्यश्वः इत्यादावपि दधिघटकेकारव्यक्तेरपि स्वरादिगणपठितत्वमङ्गीकृत्य प्रकृतिभावापादना स्यात् । अत एवात्र समाधाने कैयटनागेशादिभिर्न रुचिर्दर्शितेति ।

**पञ्चमोपायः** - रत्नाकरकृदुक्तोपायोऽपि तावदस्थवीय एवेति । तेनोक्तम् उपजीव्यविरोधान्न सन्धिरिति। अयं भावः - अविकृताऽकारादिषु गृहीताजादिपदशक्तिः स्वोपजीव्याविकृतत्वविघातकः 'आद्गुणः' इत्यादिप्रवृत्तिं प्रति कारणं न भवतीति । तन्न । 'आदिरन्त्येन सहेता' इत्यनेनाऽविकृताकारत्वादिना शक्तिर्न बोध्यते । किन्त्वकारा-दिचकारान्तसमुदायघटकबोध्यतावच्छेदकधर्मोपलक्षितत्वादिना, तथा चाविकृतत्वस्य शक्यतावच्छेदककोटावप्रवेशेन त-स्योपजीव्यत्वाभावेन तद्विरोधस्य निष्फलत्वादिति । न चाविकृताकारादिश्रवणमुपजीव्यः जातः शक्तिग्रहः स्वोपजी-व्याविकृताकारादिश्रवणं न विहन्तीति रत्नाकरकृद्भाव इति वाच्यम् । तथा चेदं दूषणं निमित्तादपरादिषोर्धानुष्क-स्येव वल्गितमनुकरोतीतीदमयुक्तमिति विषमपदविवृतिकारः । किञ्च अविकृताकारादिष्विति सति सप्तमी, ज्ञायमाने-ष्विति शेषः । तथा च तेषु ज्ञायमानेषु सत्स्वेव गृहीता याऽजादिपदशक्तिरित्यर्थः अर्थादजादिपदशक्तिग्रहं प्रति अविकृताकारादिश्रवणप्रत्यक्षत्वेन कारणता, पश्चात् सन्धौ चाविकृताकारादिश्रवणं न भविष्यतीत्युपजीव्यविरोधः इति न वाच्यम् । शक्तिग्रहेऽविकृताकारत्वादिश्रावणेन कारणताया अभावात् । शक्तिज्ञानस्यादिरन्त्येन सहेतेति सूत्रज-बोधात्मकतया तत्र च पदज्ञानविधयाऽकारादिबोधजनकत्वेन तात्पर्यविषयीभूतसमुदायज्ञानस्यैव कारणत्वात् । अन्यथा सुप् - प्रत्याहारस्यैवासिद्धिः । सूत्रे सु इति नास्ति । किन्तु स्वौ इति वर्तते । तथा च तेन प्रत्याहारे स्वौप् इति स्यात् सुबिति न स्यात् । न च शक्तिनिश्चयमुपजीव्य प्रवृत्तं सन्धिकार्यं तन्निश्चय विरोधिसंशयजनकमित्येवो-पजीव्यविरोध इति शङ्कनीयम् । पाणिनिप्रभृतिगुरुशिष्यपरम्परावगतव्याख्यानान्निर्णयो भविष्यति । उपजीव्यविरोधान्न सन्धिरिति रत्नाकरकृतः दूषणं भट्टनागेशेन साध्वकारि । तद्यथा - 'यत्तु उपजीव्यविरोधात् सन्धिर्न । तथा हि अजादिसंज्ञाग्रहकाले 'आद्गुणः' इत्यादीनामनिष्पत्त्या तदप्रवृत्ताविकृतरूपाकारादिषु गृहीताजादिपदशक्तिः पश्चादच् प्रत्याहारे ज्ञाते उपेन्द्र इवात्रापि तत्प्रवृत्तौ विरुद्ध्येत । न हि सन्धिकार्ये कृतेऽविकृतरूपश्रवणं भवति'इति । तन्न । पुनरच्पदस्यार्थान्तरे शक्त्यग्रहेण तद्विरोधाभावात् । न च सन्धौ सन्देहः । व्याख्यानतो निर्णयसम्भवात् ।[12]

**षष्ठोपायः** - संहिताया अविवक्षया न सन्धिरिति लक्ष्मीकृन्मतमेव गरीयः । वाक्ये तु संहिता विवक्षाधीना भवति । अइउण् इत्यादिसूत्राणां वाक्यत्वं तु पूर्वं प्रतिपादितमेव । छायाकृदुपायोऽपि तथैवेति उक्तञ्च 'ननूक्तरीत्या (अनुकरणत्वभङ्गान्न विभक्तिः) सुपोऽभावेनावाक्यत्वाद् वाक्यीया विवक्षा कथम् अत्रेति चेत् । तत्र परिनिष्ठित-त्वेन सुबन्तपदतुल्यपरिनिष्ठतसमूहस्यापि वाक्यत्वेन ग्रहणेनादोषात् ।[13]' तथा चैषां वाक्यचयत्वात् संहिताऽविवक्षेति ।

रत्नाकरकृतात्र पक्षे यद्दोषदानं कृतं तदुपस्थाप्य निराक्रियते । तेनोक्तम् - 'तितउः' इत्यादावेकपदेऽपि तस्याः अदर्शनात् । विवक्षाविरह अगतिकगतित्वात्, महेश्वरेच्छाविरहोक्तेरयुक्तत्वाच्च । अयं भावः 'तितउः' इति एकपदत्वेऽपि सन्धिविरहः । तस्मात् 'संहितैकपदे नित्या' इत्यादिवचनस्य अव्याप्तिग्रस्तत्वान्न प्रमाणार्हमिति ।

किञ्च उपजीव्यविरोधान्न सन्धिरिति गतेः सत्त्वात् संहिताऽविवक्षारूपैकगतित्वाश्रयणन्नोचितमिति । तन्न । 'तितउः' इति वैदिकपदं गृहीत्वा अव्याप्तिदानं न समीचीनं यतो हि सर्वे विधयः छन्दसि विकल्प्यन्ते ।

**सक्तुमिव तितउना पुनन्तो, यत्र धीरा मनसा वाचमकृत ।**

**अत्रा सखायः सख्यानि जानते, भद्रैषां लक्ष्मीर्निहिताऽधिवाचि ।**[१४]

इति पस्पशाह्निके भगवता भाष्यकृता ऋग्वेदस्य मन्त्रः उद्धृतः । एतन्मन्त्रघटकतितउपदमधिकृत्य दोषदानमकिञ्चित्करमेवेति ।

**सन्दर्भाः -**


1. सिद्धान्तकौमुदीलक्ष्मीटीकायाम् - पृ. सं. 8 ।
2. महाभाष्ये प्रदीपे - पृ. संख्या - 85 ।
3. न्यासपदमञ्जरीसहितकाशिकायाम् - पृ. सं. 15 ।
4. सि. कौ. रत्नाकरटीकायाम् - पृ. सं. 3 ।
5. तत्रैव ।
6. शब्दकौस्तुभे पृ. संख्या - 30 ।
7. सि. कौ. लक्ष्मीटीकायाम् - पृ. सं. 8 ।
8. महाभाष्ये छायाटीकायाम् - पृ. सं. 89 ।
9. टीकाषट्कोपेतशेखरे, पृ. सं. - 12 ।
10. सि. कौ. रत्नाकरे पृ. सं. 04 ।
11. महाभाष्योद्द्योते पृ. सं. 89 ।
12. टीकाषट्कोपेतशेखरे - पृ. सं. 12 ।
13. महाभाष्यं छायाटीकायाम् - पृ. सं. 89 ।
14. ऋग्वेदे - 10/71/2 ।



**सहायकप्राचार्यः, स्नातकोत्तरव्याकरणविभागे**

**कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयः,**

**दरभङ्गा ।**




# शब्दसाधुत्वे 'इको गुणवृद्धी' सूत्रस्योपयोगित्वम्

✍ डॉ.ब्रजराजकुमारद्विवेदी

**(अष्टाध्याय्याः प्रथमाध्यायस्य प्रथमपादस्य तृतीयं सूत्रं भवति 'इको गुणवृद्धी' सूत्रम् । इदञ्च परिभाषासूत्रत्वेन प्रसिद्ध्यति । परिभाषासूत्रञ्च यद्यपि न शब्दसाधुत्वस्य साक्षाद्बोधकम्, तथापि विधिसूत्रेणैकवाक्यतया परम्परया तत्साधुत्वबोधनायोपयोगित्वं धत्ते । महाभाष्यमाश्रित्यात्र निबन्धे इग्ग्रहणप्रयोजनप्रतिपादनपुरस्सरं सूत्रसार्थक्यविचारः, क्वास्याः परिभाषाया उपस्थितिः, परिभाषायां तच्छेषपक्षपदोपस्थितिपक्षयोः स्वीकारोऽस्वीकारो वेति विमृश्य स्वतन्त्रपरिभाषात्वसमर्थनम्, 'सिच्यन्तरङ्गं नास्ति' इति ज्ञापनप्रकारः इत्यादिविषयो निरूपितः ।)**

शब्दसाधुत्वप्रक्रियायां व्याकरणशास्त्रस्योपोगित्त्वं प्रतिपदे दृग्गोचरी भवति, व्याकरणशास्त्रे संज्ञापरिभाषाविधिनियमातिदेशाधिकारादीनि शट्प्रकारकाणि सूत्रण्येव साधुत्त्वं स्थापयन्ति, व्याकरणे शब्दसाधुत्वप्रतिपादकसूत्राणां लक्षणमित्थं विहितमस्ति शक्तिबोधकत्वं संज्ञासूत्रत्वम्[1] येन शाक्तेर्ज्ञापनं स्यात् तत् संज्ञासूत्रमुच्यते, इत्थं लक्षणे सति धातुभिः प्रातिपदिकैरपि शाक्तेर्ज्ञापनं भवति । तेष्वपि लक्षणमतिव्याप्तं स्यात् । अतो लक्षणान्तरं परिष्क्रियते । व्याकरणशास्त्रोयसंकेतितार्थबोधजनकत्वं संज्ञासूत्रत्वम् । धातौ प्रातिपदिके च व्याकरणशास्त्रीयसंकेतितार्थबोधकत्वाभावो विद्यते, अपित्वाधुकार्थबोधकत्वं तत्र तिष्ठति, एवं सति तत्र दोषाभावः । स्वदेशे लक्ष्यसंस्कारकबोधजनकत्वं परिभाषात्वम्[2]। अनियमे नियमकारिणीत्वं परिभाषत्वं वा, ईदृशलक्षणे सति संज्ञासूत्रेष्वपि परिभाषासूत्रस्य लक्षणमतिव्याप्तम्, पुनर्लक्षणान्तरं परिष्क्रियते । संज्ञासूत्रभिन्नत्वे सति पाणिन्युच्चरितत्वे सति लक्ष्यधार्मिकसाधुत्वप्रकारकाप्रामाण्यज्ञानानास्कन्दितबोधजनकत्वं परिभाषासूत्रत्वम् । इत्थं लक्षणे सति संज्ञासूत्रेषु परिभाषासूत्रस्य लक्षणं नातिव्यातम् । साक्षाद्लक्ष्यसंस्कारकशास्त्रजन्यसाधुत्वप्रकारकबोधजनकत्वं विधिसूत्रत्वम्[3]। अन्यनिवृत्तिफलकत्वे सति सिद्धार्थज्ञानप्रतिपादकत्वं नियमसूत्रत्वम्[4]। आरोपबोधकत्वमतिदेशसूत्रत्वम्[5]। विधिसूत्रैकवाक्यतयार्थबोधजनकत्वमधिकारत्वम्[6]। प्रक्रियांश - दर्शनांशभेदेन व्याकरणशास्त्रस्य स्वरूपं द्वैविध्यं निर्धारितम्, तत्र द्वैविध्यस्वरूपेषु व्याकरणे प्रक्रियांशे दर्शनांशे वा परिष्कारो विहितोऽस्ति । प्रक्रियांशे समस्तशब्दानां व्युत्पत्तियुक्तविग्रहप्रकृतिप्रत्ययाश्च विवेचिताः। एवमेव सूत्रघटकपदसंबन्धिव्याप्त्यतिव्याप्त्यसंभवदोषशून्यः परिष्कारोऽपि तत्र विहितः। दर्शनांशे शब्दसम्बन्धि दर्शनत्वं वर्णितम् । उक्तञ्च वाक्यपदीये -

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः। प्रथमं छन्दसामङ्गं प्रहुर्व्याकरणं बुधाः॥**[7]

एवमेव शब्दानां साधुत्वार्थं पाणिनिमहर्षभिरनेकानि सूत्राणि प्रणितानि । शब्दप्रयोगे साधुत्वमुज् ज्ञाने इत्यादि विषयीणी जिज्ञासा वृद्धिशब्दनिरूपणावसरे महाभाष्ये तावदुपस्थाप्यते ।

नैव प्रयोगे नापि ज्ञानेऽपितु प्रक्रिया पुरस्सरं साधुशब्दानां प्रयोग एव साधुत्वं तिष्ठति, शब्द-साधुत्वात्मिकाप्रक्रियायां साधुत्वं नाम व्याकरणसूत्रेण प्रतिपाद्यत्वम्, आप्तत्वेनोच्चरितत्वं वा, उक्तञ्च महाभाष्ये साधुशब्दैरेव प्रयोक्तव्याः नासाधुषु । एवम् लोकेऽपि साधुशब्दाः प्रयोक्तव्याः सन्ति । किञ्च लौकिकव्यवहारेऽ-साधुशब्दानामपि प्रयोगबाहुल्यं दृश्यते । केचनासाधुशब्देनापि लौकिककार्याणि सम्पादयन्ति । तैस्तु साधुशब्द-स्मरणद्वारा साधुशब्देनैव व्यवह्रिताः । असत्त्वे वर्त्तमनि स्थित्वा ततः सत्यं समीहते, इत्यादि सिद्धान्तेनैव साधितः । एतदर्थं व्याकरणसूत्राणि निर्मितानि सन्ति, एतैः सूत्रैरेव साधुशब्दाः नियम्यन्ते । तथैव इदमपि सूत्रं साधुशब्दाननु-शासयति । यद्यपि व्याकरणशास्त्रेऽपि मोक्षोपयोगिभूताः मार्गोपदिष्टाः सन्ति। तथापि विषयेऽस्मिन् व्याकरणमहाभाष्ये पतञ्जलिना अप्युक्तम् - एकः शब्दः सम्यग्ज्ञातः सुष्ठुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति ।[8] अनेन वचनेन नहि शब्दशास्त्रे निष्णातवैयाकरणानामेव मुक्तिः । अपितु यैः किंचिदंश एव व्याकरणस्याधीतः तैरपि मुक्तिः प्राप्या । अत एव महाभाष्ये शङ्क्यते-शब्दानां प्रयोगे ज्ञाने वा मुक्तिः, नापि शब्दानां प्रयोगे[9], नापि ज्ञानेऽपितु शब्दशास्त्रीयप्रक्रियापुरस्सरं साधुशब्दानां प्रयोगे मुक्तिः । लौकिकव्यवहारस्तु साधुशब्दात्मकोऽस्ति । व्याकरणसूत्रस्य नियमानुरूपेणैव शब्दानां संरचना, एवमेव शब्देनैव वाक्यसंरचना विहिता । तत्र वाक्यसंरचनायामुपयोगिभूतं सूत्रं विलिख्यते । तच्च सूत्रम् ''इको गुणवृद्धी'' इति शास्त्रमिदं परिभाषासूत्रम्, इदं विधिसंज्ञासूत्रेषूपकारकम् । शास्त्रे परिभाषासूत्राणां लक्षणं पूर्वोक्तरूपेणैव विहितमस्ति । सूत्रेऽस्मिन्पदद्वयम् इकसिति षष्ठ्यन्तानुकरणं गुणवृद्धीति प्रथमान्तं पदमिति 'अत्वसन्तस्य चाधाातोरिति'[10] सूत्रेणात्र सुप्लुका लुप्तत्वात् दीर्घाभावः। उपतिष्ठते पदमध्याह्रियते । अत्र ''अदेङ्गुणः''[11] ''वृद्धिरादैजिति'' पूर्वसूत्राभ्यां गुणवृद्धीपदेऽनुवर्तते सूत्रे गुणवृद्धी इति पदोल्लेखनस्या-वश्यतास्ति न वा चेदत्र गुणवृद्धीशब्दं नोल्लिखेत्, तदा ''अदङ्गुण'' इत्यतो गुणपदं ''वृद्धिरेचि'' इत्यतो वृद्धिपदञ्चागमिष्यति परिष्कृतसूत्रार्थ इत्थं स्यात्-गुणवृद्धीपदेन यत्रेकारादयो दृश्यन्ते, तत्रैव इको गुणवृद्धीति परिभाषा सूत्रमुपतिष्ठते । अस्याः पङ्क्तेरयं भावो गुणो वृद्धिरित्युच्चार्य यत्र गुणवृद्धी विधीयेते तत्र इक इति षष्ठ्यन्तं पदमुपतिष्ठते । चेदत्रेक्पदं नोल्लिख्यते तदा यत्र साक्षाद् स्थानिपदं न श्रूयते तत्रैवेयं परिभाषोपतिष्ठते । आकारसंध्याक्षरव्यञ्जनेषु गुणनिवृत्यर्थं सूत्रे इग्ग्रहणम् । आत्सन्ध्यक्षरव्यञ्जनादिष्वपि ''सार्वधातुकार्द्धधातुकयो-रनेन''[12] गुणः प्राप्यते । अस्यां स्थितौ गुणविधायकं सूत्रं न गच्छेदेतद्दोषनिवारणाय सूत्रे इक्पदस्योल्लेखोऽस्ति । परञ्च यानि गुणवृद्धीघटितानि सूत्राणि तत्र सर्वत्रेक्पादानुवृत्तेरभावे सति, ''सार्वधातुकार्द्धधातुकयोरित्यत्रापि इक्-पदस्योपस्थितिर्न स्याद् । एवं सति गुणविधायकसामान्यसूत्रेणैतद्नियमस्यापलापः स्याद् । सार्वधातुकार्द्धधातुक-प्रत्ययव्यवहिताव्यवहितरूपेकोऽचि परे गुणः स्यादिति । अथवा सार्वधातुकार्द्धधातुकयोः पूर्वत्वविशिष्टान्तस्य गुणः। तदानेन इकनिकोः गुणो क्रियते । या प्रापणे वा गतिगन्धयोः उभाभ्यां धातुभ्यां तृच्प्रत्ययकृतेऽनुबन्धलोपे या+तृ, वा+तृ इति स्थिते सति, 'सार्वधातुकार्द्धधातुकयोः' इति सूत्रेणानिग् भूताकाराकारस्याकारगुणं प्रसक्तं तदा याता,

वाता इत्यस्य स्थाने यता, वतेति प्रयोगापत्तिः, पूर्वोक्तस्थले दोषशमनार्थं सूत्रे इक्ग्रहणम् । तथैव संध्यक्षरे ग्लै, म्लै, हर्षक्षये धातुभ्यः शप्प्रत्यये ऐकारस्येकारो गुणे सति उपदेशत्वाभावात् ''आदेच उपदेशेऽशिति'' सूत्रेणात्वानापत्तिः, ग्लायति, म्लायतीत्यस्य स्थाने ग्लयति, म्लयति इत्यस्यापत्तिः, ग्लायति, म्लायति, अत्रोपदेशसामर्थ्याद् संध्यक्षरस्य गुणोऽभावः, यद्यैकारस्थाने एकारगुणः क्रियते तदा ग्लै, म्लै इत्यस्य ग्ले, म्ले, इत्युच्चारयेत् । ग्लै म्लै अनेनो-च्चारणेनैकारस्याकारैकारौ गुणाभावः । यद्युपदेशसामर्थ्याद् गुणाभावः साध्यते, तदायादयोऽपि न प्राप्नुवन्ति । परञ्च आयादयो भवन्त्येव । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्येत्, गुणं प्रत्युपदेशोऽनर्थक अतो गुणविधिं बाध्येत् । परञ्चायादस्य ऐकारनिमित्तमत उपदेशसामर्थ्यादायादयो न बाध्येरन्, एतदपि प्रयोजनार्थमत्र इक्पदग्रहणम् । अनया रीत्या पूर्वोतस्थेषु गुणाभावः साधितः । एवमेव उम्भपूरणेऽस्मात् धातोः तृच्, तुमुन्, तव्यत् प्रत्ययपरे सति उम्भ+तृच्,उम्भ+तुमुन्, उम्भ+तव्यत्, उम्भिता, त्रिषु प्रयोगेषु ''सार्वधातुकादर्धधातुकयोः'' अनेन भकाररूपिव्यञ्जनस्यापि गुणः प्राप्यते, किन्त्वत्र सूत्रज्ञापनेनैव गुणस्याभावः । तद्यथा ''आतोऽनुपसर्गे कः''[13] इति सूत्रे शङ्क्यते ककारानु-बन्धाः किमर्थमिति ''आतोऽनुपसर्गे अः'' एतदेव सूत्रशरीरं क्रियतां ककारानुबन्धेन ज्ञाप्यते कित्करणार्थमिति, तेन कित्करणन गोदः कम्बलदः 'आतो लोप इटि च'[14] सूत्रेणाकारलोपाथं कित्करणं विद्यते, न त्वाकारस्य स्थानेऽ-कारगुण इति, यद्याकारस्याकारगुणः तदा 'आतो लोप इटि च' लोपविधानमेव व्यर्थं स्यात्, अतो विज्ञापयति ''सार्वधातुकादर्धधातुकयोः'' अनेनाकारस्य गुणो नेति । गो+दा+अ ''सार्वधातुकादर्धधातुकयोः'' दकारघटका-कारस्याकारगुणे गो+द+अ+अ पररूपे गोद इति जायते । तदा ''आतोऽनुपसर्गे कः'' अत्र कित्करणमनर्थकं सति ज्ञापयति नाकारस्य गुणो भवतीति, अतो याता, वाता अत्र दोषाभावः । एवञ्च गोद अस्य प्रयोगस्य साधुत्वे बाधकाभावः। परञ्च ''तुन्दशाकयोः परिमृजापनुदोः''[15] इत्यत्रनुवृत्यर्थं कित् करणमस्ति । दृष्टान्तरूपेण 'सप्तम्यां जनेर्डः'[16] इत्युक्तमत्र विचारितं मन्दुरजा इत्यादिप्रयोगाणां सिद्ध्यर्थं डप्रत्ययस्य स्थानेऽप्रत्ययः कथं न कृतः । अप्रत्ययविधानेनैव सकलप्रयोगाणां सिद्धिर्जायते, डप्रत्ययस्य विधानं व्यर्थं सज्ि ज्ञापयति व्यञ्जनस्य गुणाभावः । डित्करणेनाभस्यापि टेर्लोपोज्ञाप्यते तेन टेः सूत्रेण टिलोपो यथा स्याद्, यदि च व्यञ्जनस्य गुणः क्रियते तदा डित्करणमनथकं स्यात् । उपसरजन्+अ सार्वधातु अनेन जनघटकोत्तरवर्तिनकारस्य आन्तर्यत अकारगुणे सति उप-सरज+अ+अ त्रयाणामप्यारस्य ''अतो गुणे'' पररूपे उपसरजो, मन्दुरज इति सिद्धं स्याद् । पुनः विचार्यतेऽत्र सूत्रे गुणवृद्धी पदं संकेतितविवक्षितमानुपूर्वीस्वरूपं वा चेत् संकेतितं गृह्यते, तदा त्रिषु स्थलेषु दोषापत्तिः 'गमेर्डोः'[17]अत्र गमेश्च गुण उच्चमाने आन्तर्यतः ओकाररूपगुणविधीयमाने गोशब्दो निष्पद्यते । चेत् संकेतितगुणेष्वपि इको गुणवृद्धीति परिभाषासूत्रस्योपस्थितिः स्यात् । तदा गोशब्दो न निष्पद्यते । एवं सति द्यौः, पन्था, स इत्यत्र दोषः स्यात् । दिविति प्रातिपदिकात् सुप्रत्ययपरे 'दिव औत्'[18] सूत्रेण जायमाना औकाररूपा वृद्धिः इकारस्यैव स्थाने विधीयते, द्यौः इति पयोगो न निष्पद्येत । तथैव पन्था अत्रापि पथिन्प्रातिपदिकाद् सु प्रत्यये ''पथिमथ्यृभुक्षामात्''

अनेन पथिन्घटकेकारस्य चेदात्वं विधीयते, तदा पन्थेति प्रयोगस्य विलोपापत्तिः स्यात् । एवं तद्+सु,इदम्+अम् तद् शाब्दे इक्प्रत्ययाहारघटकवर्णस्याभावात् ''त्यदादीनामः'' अनेनात्वाभावाद् सः, इदमत्रकारेकारयोरात्वे उभयोः प्रयोग-योर्नोपपद्यते । उपर्युक्तस्थलेष्वियं परिभाषासूत्रं नोपतिष्ठेत्, अतः संज्ञया विधाने नियम इत्यस्याभिप्रायोऽयम्, संज्ञया ये विधीयन्ते तत्र नियमः । गुणवृद्धी संज्ञया यत्र अत्, एङ्, आत्, ऐच् विधेयः तत्रैव परिभाषासूत्रस्या-पस्थितिर्भवति । द्यौः इत्यादिषु औत्वेन, अत्वेन विधिरस्ति, अतस्तत्र परिभाषा नोपतिष्ठते । वार्त्तिकमिदं खण्डितं पूर्वसूत्रत एव गुणवृद्धी पदमनुवर्तिष्यते पुनः गुणवृद्धीग्रहणं व्यर्थं सद् विज्ञापयति यत्र संकेतितगुणवृद्धी पद-मुच्चार्य (अ, ए, ओ, आ, ऐ, औ) विधिरस्ति तत्र इको गुणवृद्धीति परिभाषासूत्रस्य प्रवृत्त्यभावः, यत्र गुणवृद्धी आनुपूर्वीशब्दमुच्चार्य गुणवृद्धी विधीयेते तत्रैवेदं प्रवर्तते । द्यौः, सः, इदम् इत्यादिषु प्रयोगेषु गुणवृद्धी शब्देन विध्यभावः, अलोऽन्त्यसूत्रेणान्त्यालः कार्यं विधाय दोषाभावः समुत्पादितः । इत्थं सूत्रार्थप्रतिपादितेऽपि सूत्रे पुनः शङ्क्यते, वारैकमेवोक्तं गुणवृद्धी पदम् । यत्र वृद्धी पदमुच्चार्य वृद्धी विधीयते, गुणपदमुच्चार्य गुणो विधीयत इत्यर्थः कथं संगच्छते । ''वृद्धिरादैच्'', ''अदेङ्गुणः'' इत्यतः गुणवृद्धी पदमनुवर्त्तते । तदा ''अदेङ्'', ''आदैच्'' इत्यनयोः गुणवृद्धी संज्ञापत्तिः स्यात् । उपर्युक्तविषये समाधिरियं कान्तारतरणमिव गुणवृद्धिपदं अदेङ्, आदैच्च परित्यजति । क्वचित् गुणपदस्य सम्बन्धाः क्वचित् वृद्धिपदस्य सम्बन्धाः मण्डूकप्लुत्या नियोज्यते, यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति मध्ये सम्बन्धं न कुर्वन्ति, तद्वदधिकारः प्रचलति । तथैव वृद्धिपदमदेङ्ः सम्बन्धं परित्यक्त्वा वृद्धिरिति संज्ञां विदधाति । अथवा ''अदेङ्'' इत्यस्यैव वृद्धिसंज्ञा प्राप्ता तस्यैव गुणसंज्ञा-विधानं व्यर्थं सद् बाधकः स्यादिति । किमिदं सूत्रमलोन्त्यस्य अवयवः।[19] अहोस्विदलोन्त्यसूत्रमस्य सूत्रस्यापवादो वा अङ्स्यात्र षष्ठीनिर्देशत्वाद् ''अलोऽन्त्येति'' परिभाषा सूत्रमेवं विधेयताप्रयोजकं गुणश्रुतिग्रहणाद् इक्पदमेवोपतिष्ठते। इगन्ताङ्गस्य गुणो भवति स च भवन्नलोऽन्त्येत्यर्थो निष्पद्यते । एवं सति ''इको गुणवृद्धी'' ''अलोऽन्त्यस्या-वयवः'' सम्पद्यते । चेदङ्गस्यात्र स्थानषष्ठीम् अस्वीकृत्यावयवषष्ठो स्वीक्रियते, तदा अलोऽन्त्यपरिभाषाया ''इको गुणवृद्धी'' सूत्रमपवादः स्यादिति । अत्र प्राप्तस्य बाधो नास्ति, अनेन वचनेनाप्राप्तीत्यस्यानुमीयते । असार्वधातु-कार्द्धधातुकयोरङ्गावयवो य इक् तस्य गुणवृद्धी विधीयेते इत्यर्थः कृतः । एककालावच्छेदेनो यत्र षष्ठ्यसम्भवः, अतोऽत्र तच्छेषतदपवादपक्षयोः समुच्चयस्याशंका नास्तीति षष्ठ्यर्थत्वं विकल्पोऽपि न सम्भाव्यते । तद्यथा तच्छेष-पक्षे मिदि, मृजि, ऋच्छि, दृशि, क्षिप्र, क्षुद्र, इत्यादिष्वन्त्यत्वविशिष्टव्यञ्जनवर्णस्य गुणविधिः प्राप्यते । इग्ग्रहणेना-दोषत्वं साधितम् । पक्षेऽस्मिनेकत्र ''अलोन्त्यस्य'', ''इको गुणवृद्धी'' द्वयोः सूत्रयोः सहार्थेनैवोपस्थितिः जाता । तदा ''मिदेर्गुणः'' इत्यादिष्वन्त्यत्वविशिष्टेकोऽभावान्न गुणः । एवञ्चोभयत्र सूत्रे तच्छेषत्वाद् अलोन्त्यसूत्रेण व्यञ्ज-नस्य स्थाने गुणवृद्धी च निषिध्येते । अन्यत्रापि दोषः याता, वाता, ''सार्वधातुकार्द्धधातुकयोः'' सूत्रेण सर्वादेशश्च गुणोऽनिगन्तस्यैवेति प्राप्नोति । तत्तु कथं सम्भाव्यते, अलोन्त्यस्येति या षष्ठी सा चान्त्येकमुपसंक्रान्ता तथैवाङ्ग-

स्येति या षष्ठी तद्यदिदानीमनिगन्तमङ्गं तस्य गुणः सर्वादेशश्च प्रापयति । प्रकृते सार्वधातुकार्द्धधातुकयोरित्यत्र अनुवर्त्तिष्यमाणपदेशु त्रिषु स्थलेषु षष्ठी दृश्यते, अङ्गस्य, अन्त्यस्य, इकः, अन्त्यस्येति या षष्ठी इक्पदेन सह सम्बद्धः, अङ्गस्य या षष्ठी सा स्वतन्त्रास्ति । तदा सार्वधातुकार्द्धधातुकप्रत्यये परे सति अङ्गस्य गुणः, एवमेव सार्वधातुकार्द्धधातुकप्रत्ययपरे सति इगन्ताङ्गस्य गुण इत्यर्थद्वयं कृतम् । या+तृ,वा+तृ, अत्रैकेनार्थेन गुणस्य प्राप्तिः, अपरेण निषिध्यते, प्रकृते च दोषाभावः यथा अलोऽन्त्येति षष्ठी अन्त्यमिकमुपसंक्रान्ता तथैवाङ्गस्यापि स्थानरूपा या षष्ठी साप्यन्त्येकमुपसंक्रान्ता तद् यदिदानीमनिगन्तमङ्ग षष्ठ्येव नास्तीति । तत्र न गुणः प्राप्तः नापि सर्वादेश-श्च विषयः कचिदुक्तं तन्न । सर्वादेशश्चात्र चकारः ह्यर्थे विद्यते । निश्चितार्थवाची न तु समुच्चयार्थवाची अतो दोषः तदवस्थ एव, तथाहि ''मिदेर्गुणः'' इत्युच्यमाने इक्पदेन सह सम्बन्धे सति मिदेरिको गुणः न त्वन्त्यवर्णस्येति परञ्चालोन्त्यसूत्रेणान्त्यस्यैव गुणो न तु इकः पुनः गुणविधानसामर्थ्याद् सर्वस्य स्थाने गुणः प्राप्यते। तच्छेषपक्षे सर्वत्र दोषः । तदपवादपक्षेऽन्त्यानन्त्ययोः वर्णयोः स्थाने गुणः स्यादिति । किञ्च ''सार्वधातुकार्द्धधातुकयोः'', ''ह्रस्वस्य गुणः'', ''जुसि च'', ''ऋतो ङिसर्वनामस्थानयोः'', ''ओर्गुणः''एभिर्विधीयमानं कार्यमन्त्यान्त्यवर्णस्थाने स्याद्। तदा पुगन्तलघूपधस्य चानेन विधीयमानो गुणो व्यर्थः सद् विज्ञापयति । पुगन्तलघूपधस्यैवऽनन्त्यस्य, नाऽन्यस्याऽनन्त्येति गुणः स्यादिति, इत्थं समस्तदोषाणां निवारणं भविष्यति। किञ्च पुगन्तलघूपधसूत्रेण प्रकृते नियमः क्रियते, तदा ईहिता, ईहितुम्, ईहितव्यमित्यादिषु गुणाभावः स्याद् । नियमाकार इत्थं भवति ''पुगन्तलघूपधस्यैव'' ''सार्वधातुका-र्द्धधातुकयोः'' अथवा पुगन्तलघूपधस्य सार्वधातुकार्द्धधातुकयोरेवानेन पुगन्तलघूपधस्यैव व्यवस्थितं न तु सार्वधातु-कार्द्धकयोरिति, तेनानन्त्यस्य गुणः प्राप्नोति । उभयोः पक्षे दोषः समान एव तदा विप्रतिषेधपरिभाषया समाधत्ते । प्रकृते विप्रतिषेधसूत्रस्य प्राप्त्यभावः । अलोन्त्यसूत्रं तु राजकीयमत्र ''राज्ञः क च'' इति सूत्रेण राजन्प्रातिपदि-कादन्त्यनकारस्य स्थाने ककारादेशं विधाय चारितार्थ्यम् । इको गुणवृद्धी चयनम्, चायको, लवनं लावकः, अत्र चारितार्थ्यमिति । मेद्यति, मार्ष्टि, अत्रोभयोः सूत्रयोः प्राप्तिरस्ति, मृज, मिदत्रलोन्त्यसूत्रसहकारेण सार्वधातुकार्द्धधातु-कयोः सूत्रेण दकारजकारयोः स्थाने गुणः प्राप्तः, ''इको गुणवृद्धी'' विप्रतिषेधसूत्रसहयोगेन ऋकारेकारयोः स्थाने गुणवृद्धी प्राप्येते । किन्त्वत्र विप्रतिषेधसूत्रस्य सम्भावनैव नास्ति । द्विकार्ययोगे हि विप्रतिषेधः, न चात्र द्विकार्य-योगः । एवमेव वृक्षेभ्यः, प्लक्षेभ्यः, वृक्ष+भ्यस्, प्लक्ष+भ्यस्, अत्रैक एव स्थानी दीर्घैत्वरूपौ द्वावादेशौ विप्रतिषेध-सूत्रनियमेन ''बहुवचने झल्येत्'' इति एत्वमेव क्रियते । यत्रैक एव स्थानी कार्यद्वयस्यानुभवं करोति तत्रापि विप्रति-षेधसूत्रं प्रवर्त्तते । किञ्चासम्भवेऽपि विप्रतिषेधो भवति । अत्राकारस्यैवात्वमेत्वञ्च प्राप्तमुभयोर्युगपदसम्भवो विप्र-तिषेधसूत्रेण परकार्यविधिः । सिद्धान्ते तु द्वयोर्हि सावकाशयोः विप्रतिषेधो भवति । यथा ''इको यणचि'' सूत्रस्य न कुत्रापि चारितार्थ्यमतः अलोऽन्त्येन नास्ति विप्रतिषेधः। एवमुत्सर्गापवादयोश्च युक्तो विप्रतिषेधः। मेद्यति, मेद्यतः, अत्रेको गुणवृद्धी सूत्रं सावकाशं पुनः गृह्यमाणशब्देन इकं विशेषयितुं इको गृह्यमाणमिति । तथैवात्रापि

मिदिमृजिपुगन्तलघूपधाच्छिंक्षिप्रक्षुद्रेषु गृह्यमाणेनेकं विशेषयिष्यामः तदा एतेषां य इक् तस्यैव गुणवृद्धीति स्यादिति। पक्षान्तरे मिद एः मिदेरिति षष्ठी समासः, अथवा मिद इः मिदिः तस्य मिदेरिति, पुकि अन्तः पुगन्तः, लघ्वी उपधा लघूपधा, पुगन्तः च लघूपधा च पुगन्तलघूपधम्, पुकि परे सति योऽन्तः, लघ्वी या उपधा सा लघूपधा इत्थं कृते सति भिनत्ति, छिनत्ति, इत्यत्रपि दोषाभावः साधितः। चेदत्र विशेष्यते तदा भिनत्ति, छिनत्ति, अत्र दोषः स्यादेव । द्वयोः पक्षयोः तच्छेषपक्ष एव गरीयान् । तदपवादपक्षस्तु व्यभिचरितत्वाद् न स्वीक्रियते । महाभाष्यकारेण शङ्क्यते 'इको गुणवृद्धी'[20] सूत्रे वृद्धिपदस्योल्लेखत्वात् ''चेद्किङ्गिति च'' अत्रानुवृत्यर्थं वृद्धिशब्दः प्रयुङ्क्ते तथा सति अस्य सूत्रस्यार्थः सम्पद्यते । किति, ङिति, प्रत्यये परेऽव्यवहितपूर्वस्येकः वृद्धिर्न एवं सति मृजादिधातुषु दोषः समापतति, तत्र वृद्धिनिषेधार्थमपि वक्तुं न शक्यते, तत्र स्वतःवृद्धेः निषेधः भविष्यति । एवमेव तत्रोपधायामिको नास्ति । चेद् न्यमार्ट इत्यत्र (यदागमपरिभाषया)[21] अट्सहितस्य वृद्धिर्न स्यादेतदर्थमुच्यते तदपि न वक्तुं शक्यते अत्राग्रिमपरिभाषया अट्सहितस्य वृद्ध्यभावो विज्ञाप्यते । 'अन्त्यविकारेऽन्त्यसदेशस्य'[22] अनया परि-भाषया पुनः क्ङिगिति चेतदर्थं वृद्धिग्रहणमस्ति, अत इग्लक्षणस्य गुणवृद्धी प्रतिषेधौ न त्वल्लक्षणस्य वृद्धेः, तदपि न समीचीनम् 'सिचि वृद्धिः परस्मैपदेषु'[23] अनेन जायमाना वृद्धिरनिगोऽपि स्यात् । तदा अचिकीर्षीत्, अजिहीर्षीत्, अत्र सनोकारस्यापि वृद्धौ सत्याम् अनिष्टापत्तिः । उपर्युक्तस्थलेषु तु सन्प्रत्ययस्याकारस्य लोपत्वाद् दोषाभावः । परञ्च न्युनुवीत् न्युधुवीत् वृद्धिनिषेधार्थं सूत्रे वृद्धिपदस्य ग्रहणमिति तत्र तु अन्तरङ्गत्वादुवङ्कृते सति वृद्धेरभावः । यदि चान्तरङ्गकार्यं सर्वत्र विधीयते तदा अकार्षीत् अहार्षीत्, अत्रप्यन्तरङ्वृद्धेरभावः स्यात् तदात्र वृद्धिविधानार्थमुच्यते, चेत् कथं सङ्गच्छते । 'अतो हलादेर्लघोः'[24] अकारग्रहणं व्यर्थं सद् विज्ञापयति 'न सिच्यन्तरङ्गं भवति' अनेन ''अतो हलादेर्लघोः'' अत्राकारस्य व्यर्थत्वाभावः साधितः, तत्तु कुष, मुष, अत्रेकारस्य वृद्धेरभावार्थश्चरितार्थः । अकार्षीत्, अहार्षीत्, अट्सहितस्य वृद्धिनिषेधार्थं सूत्रे वृद्धिपदस्योल्लेखोऽस्ति । अस्यैव पदस्य क्ङिति चात्र अनुवर्तनं विद्यते । तदा इक्लक्षणस्यैव गुणवृद्धेः निषेधो न त्वल्लक्षणस्य वृद्धेः, पुनरत्र शङ्क्यते इक्पदं षष्ठ्यन्तानुकरणमतोऽत्र 'षष्ठी स्थाने योगः'[25] इत्यनेन इक्पदस्य निवृत्तिर्जायते, यदि चात्रेक्पदस्य निवृत्तिः क्रियत तथैव दधि, मधु अत्रापि इकारोकारयोर्निवृत्तिः स्याद्, तयोर्निवृत्तिर्न स्यादेतदर्थं महाभाष्ये परिभाषान्तरं विधीयते 'अन्यतरार्थं पुनर्वचनम्' द्वयोः सूत्रयोः चेद्विधेयमेकं तदा एकेनैव कार्यं क्रियते पुनः पुनः विधानमेव व्यर्थं स्याद् । यथा याता, वातात्र इग्यणः सम्प्रसारणम्[26] अनेन सूत्रेण सम्प्रसारणं कर्तुं शक्यते, महर्षयः 'वचिस्वपियजादीनां किति'[26] इति सूत्रेण पुनः सम्प्रसारणविधानेन ज्ञाप्यते, अनेन किति परत एव सम्प्रसारणं भवति न तु सर्वत्र, सूत्रद्वयनिर्माणसामर्थ्येनैव विषयविभागो जायते । अन्यथा ''इग्यणः सम्प्रसारणमिति'' सामान्यसूत्रेण याता, वाता, इत्यादिप्रयोगेस्वनेनैव सम्प्रसारणस्यापत्तिः स्याद्, तदा ''वाचिष्वपियजादीनां किति'' इति सम्प्रसारणविधानं व्यर्थमाप-द्येत, तथैव 'उरण् रपरः' इति सामान्यसूत्रेण सर्वेषामृकाराणां निवृत्तिः प्राप्नोति, एवं सति कर्तृ, हर्तृ, अत्रापि

ऋकारस्य निवृत्तिर्जायते, एतद्दोषवारणाय सूत्रार्थः परिष्क्रियते । यत्र ऋकारस्य स्थाने षष्ठी विभक्तिः तत्रैव ऋकार-स्य रपरो भवति । न सर्वेषु ऋकारेषु अतः पूर्वोक्तप्रयोगेषु दोषाभावः साधितः । व्याकरणे तावत् सामान्यनियमस्य विशेषनियमेन बाधो जायते । किं तावत्सामान्यसूत्रं व्यापकधर्मावच्छिन्नोद्देश्यत्वं सामान्यसत्रत्वम्, एवञ्च व्याप्य-धर्मावच्छिन्नोद्देश्यत्वं विशेषसूत्रत्वमिति सिद्धान्तितं तद्यथा - ''वृद्धिरेचीति'' विशेषसूत्रम् ''आद्गुणः'' सामान्य-सूत्रमवर्णोत्तरत्वविशिष्टे एचि परे सति पूर्वपरयोः वणयोः स्थाने वृद्धिः स्यात् । तथैव आद्गुणः सूत्रस्यार्थः क्रि-यते, अवणाव्यवहितपरत्वविशिष्टेऽचि परे सति पूर्वपरस्थाने गुणो विधीयते । ''वृद्धिरेचि'' अपवादसूत्रं एतेन गुण-सूत्रस्य विषयं परित्यज्य वृद्धिर्विधीयते । तदा उभयोः सूत्रयोः सार्थक्यं स्यात् । चेत् सर्वत्र सामान्यसूत्रेण विधिः स्यात्, तदा विशेषसूत्रं व्यर्थमापद्येत । यतो हि विशेषसूत्रस्य प्रवृत्तिस्थलं परित्यज्य सामान्यसूत्रेण विधिः क्रियते । यद्यपि सामान्यकुक्षौ विशेषस्याप्युद्देश्यमागच्छति तथापि ''प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते'' इति नियममाश्रित्य शब्दाः संस्क्रियन्ते । एवमेवेको गुणवृद्धी सूत्रं शब्दसाधुत्वं प्रतिपादयतीति दिक् ।

**सन्दर्भाः**

1. श.शे.सं.प्र.,
2. श.शे.सं.प्र.,
3. श.शे.सं.प्र.,
4. श.शे.सं.प्र.,
5. श.शे.सं.प्र.,
6. श.शे.सं.प्र.,
7. वा.प.ब्र.का.का.,11,
8. म.भा.पस्प.,
9. पा.सू.सं. 1,01,03,
10. पा.सू.सं.6,04,14,
11. पा.सू.सं.1,01,12,
12. पा.सू.सं.3,02,05,
13. पा.सू.सं.1,3,6,
14. पा.सू.सं.3,02,09,
15. उणा.सू.,
16. पा.सू.सं.7,01,84,

17. पा.सू.सं.7,01,85,

18. म.भा.इको.1,01,02,

19. प्रौ.मनो.परि.प्र.,

20. प्रौ.मनो.परि.प्र.,

21. पा.सू.सं.1,01,05,

22. परि.शे.परि.सं.41,

23. परि.जे.परि.सं.1.4,

24. म.भा.इको गु.,

25. पा.सू.सं.1,01,45,

26. पा.सू.सं.6,01,15,

**सहायकाचार्यो व्याकरणविभागः,**

**श्रीरामसंस्कृतमहाविद्यालयो विजयीपुरम्,**

**गोपालगंजः ( बिहारः )**



# व्यञ्जनाविमर्शः

✍ डॉ. स्वर्गकुमारमिश्रः

**(व्यञ्जनाविमर्शात्मकेऽस्मिन् निबन्धे साहित्यशास्त्रीयं व्यञ्जनास्वरूपं संक्षेपेणोपवर्ण्य, भट्टकुमारिलप्रभाकरभट्टलोल्लटानां व्यञ्जनाखण्डनप्रकारं परिशील्य, क्रमेण प्रमाणयुक्त्युदाहरणमुखेन वाग्वैभवेन निरस्य, नैयायिकाभिमतं लक्षणया गतार्था व्यञ्जनेति मतं प्रतिपाद्य, पुनः साधकबाधकयुक्तिभिः तदपास्य 'व्यञ्जना ब्रह्मणाप्यपलपितुमशक्ये'ति दृढं निरूपितम् । वस्तुतस्तु इदम्पदमेतदर्थस्य न वाचकं, नापि लक्षकं, नापि स्मारकं, किन्तु व्यञ्जकमिति प्रामाणिकव्यवहारदर्शनात्, प्रवाहत्वाभाववत्तीरमिति बाधनिश्चयसत्त्वेऽपि प्रवाहाभिन्नं तीरमिति अभेदबुद्धेः व्यञ्जनावृत्त्या जायमानत्वात् अप्रमात्वग्रहाभावाच्चेत्यादियुक्तिभिः व्यञ्जनाऽङ्गीकार्य्यैवेति ॥)**

**शोधसारः** - व्याकरणशास्त्रसम्मतं व्यञ्जनायाः शब्दशक्तित्वम् । साहित्यशास्त्रे सैषा व्यञ्जनाशक्तिः प्रमुखरूपेण साध्यते । "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः" इति नयेन विरतासु अभिधाद्यासु सेयं व्यञ्जनावृत्तिर्व्यङ्ग्यार्थबोधिका भवति । ध्वनिकाव्यपरम्परा व्यञ्जनया विना नैव सम्भवति इति कृत्वा सा साहित्यिकप्रिया वृत्तिः। अस्मिन् शोधपत्रे साहित्यिकदृष्ट्या व्यञ्जनायाः समुपस्थापनं विहितमस्ति । तदनु मीमांसकानां मतखण्डनपुरःसरं तस्याः वृत्तेः अभिधातात्पर्यालक्षणासु वृत्तिष्वगतार्थता निर्दिष्टा वर्त्तते ।

**प्रयुक्ताः पारिभाषिकशब्दाः** - अभिधा, लक्षणा, तात्पर्या, व्यञ्जना, व्यक्तिः, वृत्तिः, व्यापारः, ध्वनिः, ध्वननम्, प्रतीयमानम्, वाच्यः, व्यङ्ग्यः, वस्तु, अलङ्कारः, रसः, विभावः, चर्वणीयः, व्यज्यते, समयः, अभिहितान्वयवादी, अन्विताभिधानवादी, संकेतः, मीमांसकः, नैमित्तिकः, कारकत्वम्, ज्ञापकत्वम्, विधेयम्, सिद्धः, साध्यः, नित्यदोषत्वम्, शृङ्गारः, विप्रलम्भः, पूर्वपक्षः, मुख्यार्थबाधः, गुणवृत्तिरिति ।

**प्रस्तावना** - व्यञ्जना कस्य न प्रिया? दैनन्दिनव्यवहारेषु स्वाशयप्रकटनं प्रायशः व्यञ्जनया एव क्रियते । अभिधेयस्तु निमित्तमात्रम् । साहित्यशास्त्रस्य प्राणभूतः कश्चिद्व्यापारविशेषः यद्विना अखिलसाहित्यशास्त्रपरम्परा वैधव्यमधिगच्छेदिति कृत्वा काव्यप्राणस्य व्यञ्जनाव्यापारस्य महिमा सर्वातिशायी । अभिधा-लक्षणा-तात्पर्याख्यासु वृत्तिषु स्वं स्वमर्थं बोधयित्वा उपक्षीणासु यया वृत्त्या अन्योऽर्थः बोध्यते सा शब्दस्य अर्थस्य प्रकृतिप्रत्ययादेश्च वृत्तिर्व्यञ्जन-ध्वनन-गमन-प्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम ।

सा च व्यञ्जनाशक्तिः व्याकरणशास्त्रसम्मता तदीयवचनमुररीकृता साहित्ये प्रवर्त्तते इति नास्ति सन्देहः । उक्तञ्च ध्वनिकृता - "परिनिश्चितनिरपभ्रंशशब्दब्रह्मणा विपश्चितां मतमाश्रित्यैव प्रवृत्तोऽयं ध्वनिव्यवहारः"[1]

**समस्या** - व्याकरणशास्त्रं परित्यज्य कुत्रचिदन्येषु शास्त्रेषु स्पष्टतया व्यञ्जनाशक्तिर्नैव स्वीकृता । किञ्च क्वचिदभिधया क्वचित्तात्पर्यावृत्त्या क्वचिल्लक्षणया कुत्रचिच्चाप्यनुमानेन प्रतीयमानावबोधविषयः प्रतिपादितो वर्त्तते

व्यञ्जनायाश्चापलापस्तेषु तेषु शास्त्रेषु प्रमुखत्वं भजते इति कृत्वा छात्रेषु महान् वितर्कः परिलक्ष्यते । तेनैवात्र शोधपत्रे व्यञ्जनाशक्तेः शास्त्रान्तरं प्रति क्षेप्यत्वं चर्च्यते ।

**साहित्यशास्त्रे व्यञ्जना** - 'वि' उपसर्गपूर्वकात् 'अञ्जु' धातोः 'क्तिन्' प्रत्ययनिष्पन्नो व्यक्तिशब्दो "व्यज्यतेऽनयेति" व्युत्पन्नो व्यञ्जनाव्यापाररूपेऽर्थे प्रवर्त्तते । व्यक्तिर्व्यञ्जनाशक्तिः, व्यञ्जनाव्यापारो वा । सा हि व्यञ्जना न शब्दस्य न वा अर्थस्य अपि तु पद-पदार्थ-पदांश-प्रकृति-प्रत्यय-वाक्य-रचना-प्रबन्धादीनां शक्तिरिति ध्वनिकृद्भिर्बहुधा प्रतिपादिता । अन्ये साहित्यतत्त्वमर्मज्ञाः मम्मटविश्वनाथकविराजप्रमुखाः व्यञ्जनाव्यापारस्येदमेव स्वरूपं सगौरवं समुपस्थापयन्तः दृश्यन्ते । यदुक्तं विश्वनाथेन -

**विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः ।**

**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥ इति**[२]

साहित्ये चमत्कारः प्राणभूतः । स च चमत्कारः अङ्गनासु लावण्यमिव वाणीषु प्रतीयमानरूपः । प्रतीयमानोऽर्थः व्यञ्जनाव्यापारबोध्यो व्यङ्यः । सः त्रिविधः वस्त्वलङ्काररसभेदात् । तत्र वस्त्वलङ्कारौ वाच्यतादशायां वाच्यतामप्यञ्चतः न पुनः व्यङ्ग्यदशायाम् । वस्त्वलङ्काररूपो यो व्यङ्ग्यः सः वाच्याद्दूरं विभेदवान् । तस्य व्यङ्ग्यस्य विभिन्नत्वं ध्वनिकृता प्रदर्शितं प्रथमोद्योते । अपरश्च रसरूपो व्यङ्ग्यः वाच्यतां नैव सहते । उक्तञ्च मम्मटाचार्येण - "रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः" इति[3]

स रसादिशब्देन शृङ्गारादिशब्दन वा उपपादनेन न भवति रसप्रतीतिः। "नयननलिनीनालानीतं पिबन्ति रसं प्रियाः"[4] इत्यादौ ध्वन्यालोके "शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम्"[5] इत्यादौ च काव्यप्रकाशे दशमोल्लासे समालङ्कारोदाहरणे रसशब्देन शृङ्गारादिशब्देन वा न रसः प्रतीयते, अपि तु विलक्षणविभावादिद्वारैव । यदुक्तं मम्मटाचार्येण - "विभावादिभिर्व्यञ्जितश्चर्वणीयः" इति । स्वशब्देन शृङ्गारादिशब्देन वा सः केवलमनूद्यते, क्वचिच्च दोषाय कल्पते इति 'व्यभिचारिरसस्थायिभावानां शब्दवाच्यता' इत्यादिना निरूपितं तेनैव सप्तमे ।

एवमेव वस्त्वलङ्काररसरूपेण व्यङ्यस्य ये भेदाः ते अभिधया न बोध्याः इति साहित्यशास्त्रे स्थितमेव । अतः साधूक्तम् - नाभिधा समयाभावात् इति । किन्त्वत्र पूर्वाग्रहग्रहदूषिताः नैके मीमांसकाः यथाकथञ्चिदभिधया व्यङ्ग्यार्थबोधनिमित्तं यतन्ते इतिकृत्वा तेषां मतानामालोचनमादौ विधास्यते ।

**मीमांसकानां मतखण्डनम्** - अभिहितान्वयवादिभिः स्वीकृता तात्पर्यावृत्तिरपि व्यङ्ग्यबोधने न क्षमा । तेषां मते सामान्यरूपाणां पदार्थानां योग्यताकाङ्क्षासंनिधिवशात् परस्परसंसर्गरूपस्यापदार्थस्य विशेषरूपस्य वाक्यार्थस्य प्रतिपादनं जायते । वाक्यघटकपदानामन्वयमात्रबोधने संसर्गरूपस्यार्थस्य प्रतिपादने वा परिक्षीणा इयं शक्तिः कथं वा अर्थान्तरभूतस्य व्यङ्ग्यस्य बोधे समर्था भवेत् । अन्विताभिधानवादे सामान्यविशेषरूपः (क्रियापदार्थान्वितकार-

कत्वादिसामान्यधर्मेण परिगृहीतः यद्वा अपरपदार्थान्वितानयनत्वादिसाधारणधर्मेण युक्तः विशेषरूपः आनयनाद्यन्वित-गवादिरूपः) असंकेतितत्वात् अवाच्य एव अर्थः संकेतविषयं प्रतिपद्यते ।

एवमेव अभिहितान्वये अनन्वितः अर्थः वाच्यः अन्विताभिधानवाद च सामान्यतोऽपरपदार्थान्वितस्वार्थ-विषयो वाच्यः इतिकृत्वा उभये नये वाक्यार्थोऽवाच्य एव । अत एव अनभिधेयस्य वक्तृबोद्धव्यप्रकरणादिवैशिष्ट्येन प्रतीयमानस्यातिविप्रकृष्टस्य व्यङ्ग्यस्य वाच्यत्वकथा नैव संगता ।

प्रभाकरैकदेशिना केनचन मीमांसकेन यदप्युच्यते व्यङ्ग्योर्थो नैमित्तिकः, तस्य निमित्तान्तरानुपलब्धेः शब्द एव निमित्तमिति शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तत्र सर्वत्राप्युपस्थितत्वात् शब्द एव निमित्तं कल्प्यते । नैमित्ति-कप्रतीतिमनुत्पाद्य निमित्तं न विरमतीति कृत्वा "नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते" इति । अतोऽलं वृत्त्यन्तर-कल्पनया । किन्तु निमित्तत्वं न कारकत्वं न वा ज्ञापकत्वम् । कारकत्वं जनकत्वम् । शब्दस्यार्थप्रकाशकत्वान्न जनकत्वम् । नापि ज्ञापकत्वम् - यद्धि येन नियतसम्बन्धतया ज्ञातं, तत्तस्य ज्ञापकं भवति यथा धूमो वह्नेः। न चात्र शब्दस्यास्ति व्यङ्ग्येन नियतः सम्बन्धः । न च संकेत एव तादृशः सम्बन्धः, अन्वितमात्रे संकेतस्य स्वीकारात्, न तु सम्बन्धविशेषे । एवं निमित्तस्य नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव दुर्लभा ।

भट्टमतावलम्बिनः भट्टलोल्लटादयः "सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः", "यत्परः शब्दः स शब्दार्थः" इति चेत्यादिना प्रतीयमानस्य वाच्यत्वमिच्छन्ति । तन्मते यथा बलवता प्रेरित एक एव इषुः एकेनैव वेगाख्येन व्यापारेण रिपोर्वर्मच्छेदं मर्मभेदं प्राणहरणं च विधत्ते, तथा सुकविप्रयुक्तः एक एव शब्दः एकेनैवाभिधाख्यव्यापारेण पदार्थोपस्थितिमन्वयबोधं व्यङ्ग्यप्रतीतिं च जनयतीतिपर्यन्तकक्षापर्यन्तमेकैवाभिधाऽभिधावति । अतो व्यङ्ग्यत्वाभि-मतस्यार्थस्य वाच्यत्वमेव । किन्तु "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः" इति न्यायेन सकृदुच्चरितशब्दस्य दीर्घदीर्घतराभिधाव्यापारत्वाभावात् । निरकृतं चैतद्व्यक्तिविवेके महिमभट्टेनापि । यदि शब्दस्यैव दीघदीर्घतरो व्यापारः, तदा सर्वे व्यापाराः एक एवेति शक्यते वक्तुम् । तथा तु नास्ति, विभिन्नविषयत्वात् । व्यापारस्य हि विषयमुखेनैव स्वरूपप्रतिलम्भः । उक्तञ्च - **"विषयस्यैव हि समग्रभरसहिष्णुत्वात्"इति**[5]

विषयाश्च वाच्यलक्ष्यव्यङ्ग्यत्वेन भिन्नाः अर्थाः इति तदनुसारं व्यापारस्यापि वैभिन्न्यमुचितम् । एवञ्च वाच्येऽर्थे संकेतग्रहणं, लक्ष्यार्थे मुख्यार्थबाधादिः, व्यङ्ग्येर्थे च वक्तृबोद्धव्यदेशकालप्रकरणादयः सहायाः । तदेवं विषयभेदात् सहकारिभेदाच्च न स व्यापार एकरूपो भवितुमुचितमित्यसजातीयानेकव्यापारस्वीकारे व्यञ्जनासिद्धिः दूरापह्नवा ।

किञ्च 'यदर्थे यस्य शब्दस्य तात्पर्यं स शब्दार्थः' इत्यस्य अयमर्थो विज्ञेयः यद्वाक्यान्तर्वर्त्तिपदार्थेषु सिद्ध-रूपाणां पदार्थानां प्रमाणान्तरत्वात् प्राप्ततया विधानमनर्थकमिति साध्यरूपस्यैव विधेयत्वम् । यस्य च विधेयत्वं तत्रैव तस्य वाक्यस्य तात्पर्यमिति । यत्र च तात्पर्यं स शब्दार्थ इति । यथा 'लोहितोष्णीषाः ऋत्विजः प्रचरन्तीति' श्येन-

यागप्रकरणे ऋत्विक्प्रचरणोष्णीषस्यान्यप्रमाणारतः प्राप्तत्वाददग्धदहनन्यायेन अप्राप्तं लौहित्यमात्रं विधेयमिति तत्रैव विधेस्तात्पर्यम् । यथा वा 'दध्ना जुहोती' त्यत्र हवनस्य; अग्निहोत्रं जुहोती' त्यनेन प्राप्तत्वात् 'दध्नश्च' लोकतः प्राप्तेः करणत्वमात्रस्य विधेयत्वम् । एवञ्च 'रक्तं पटं वय' इति लोकवाक्येऽपि रक्तगुण-पटभाव-वयनानां त्रयाणामप्राप्तौ त्रयाणामपि विधिः, कस्यचिदेकस्याप्राप्तौ अवशिष्टयोर्विधित्वं, द्वयस्य वा अप्राप्तौ एकस्य । एवमेव सर्वत्र उपात्तशब्दार्थे एव तात्पर्यम् ।

न च लौहित्यादयः सिद्धरूपाः पुरुषप्रवृत्त्यविषयत्वात्कथं विधेया इति वाच्यम् । "भूतभव्यसमुच्चारणे भूतभव्यायोपदिश्यते" इति न्यायेन भूतानां सिद्धविषयाणां कारकादीनां भव्यानां क्रियारूपसाध्यविषयाणां च शब्दानां सहोच्चारणे भूतं भव्यार्थतयैवोपदिश्यत इत्यवगमात् 'दध्ना जुहोती' त्यादौ दध्यादिकारकपदार्थाः जुहोतीतिक्रियापदार्थैरन्वीयमानाः प्रधानक्रियानुकूलस्वस्वक्रियाभिसम्बन्धात् साध्यामानतां प्राप्नुवन्तीति सिद्धानामपि न विधेयत्वविरोधः। यथा पूर्वमुत्पन्नस्यापि घटस्य रक्ततादशायां 'रक्तो घटो जातः' इति व्यवहारः तथा सिद्धरूपाणामपि कारकाणां साध्यक्रियासम्बन्धात् साध्यरूपत्वं भाक्तमिति । एवमेव उपात्तशब्दस्यार्थे तात्पर्यं स्वीकृतं तत्कथं प्रतीतिमात्रस्य तात्पर्यं स्वीकर्त्तव्यम्। एवं हि 'पूर्वो धावति'इत्यादावपराद्यर्थेऽपि क्वचित्तात्पर्यं स्यादिति मम्मटभट्टेन सम्यगुपहसितम्।

एवञ्च "विषं भक्षय, मा चास्य गृहे भुङ्क्था" इत्यत्र सुहृदुदीरितवाक्यस्यापि 'च'कारेण वाक्यद्वयस्यैकवाक्यतया "एतद्गृहे न भोक्तव्यमि"ति एकस्मिन्नर्थे तात्पर्यमित्येतद्वाक्यस्य शब्दोपस्थापिते अर्थे एव तात्पर्यम् । व्यङ्ग्यार्थस्य शब्दोपात्तत्वाभावात् विधेयत्वाभावाच्च "यत्परः शब्दः स शब्दार्थः" इत्येवं वादिनां भट्टलोल्लटादीनामतात्पर्यज्ञत्वमभिज्ञायते ।

किञ्च शब्दश्रवणानन्तरं यावानर्थो लभ्यते तावति शब्दस्याभिधाव्यापारत्वं न सिद्ध्यति । यतो हि 'ब्राह्मण! पुत्रस्ते जातः, ब्राह्मण ! कन्या ते गर्भिणी' इत्यादौ हर्षशोकयोः प्रतीतिः मुखे प्रसन्नत्वविषण्णत्वादिलिङ्गानुसन्धानेन एव भवति नाभिधाव्यापारेण । किञ्च लक्षणीयस्यार्थस्यापि दीर्घदीर्घया अभिधया प्रतीतिसिद्धौ कृतं लक्षणाव्यापारेण। अपि च "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि"ति सूत्रे परस्परस्य विलम्बेनार्थोपस्थापकतया दुर्बलत्वमभिदधता पूर्वपूर्वस्य प्राधान्यं च स्वीकृतं तत्रभवता जैमिनिमुनिना । यदि शब्दश्रुतेरनन्तरं यावानर्थः प्रतीयते तत्र अभिधैव व्यापारः तर्हि श्रुतिलिङ्गवाक्याद्यनुगृहीतानामर्थानामभिधेयतया समकालमेवोपस्थितौ अर्थविप्रकर्षाभिधानं कथं संगतं स्यात् ।

ननु शब्दश्रवणानन्तरं सर्वे अर्थाः नाभिधया प्रतिपाद्यन्ते, अपि तु आकाङ्क्षादिसापेक्षयेति श्रुत्यादेः पूर्वपूर्वसहकारेण परपरस्य दौर्बल्यबोधकत्वमिति न मुनिवचनविरोध इति कृत्वा नात्र व्यञ्जनावसर इति चेत्, तथापि - 'कुरु रुचिं' इति पदयोर्विपर्यासे 'रुचिं कुरु' इत्यत्र सन्धौ सम्पद्यमानस्य 'चिङ्कु' इति शब्दस्य कश्मीरादिभाषायामश्लीलत्वादसभ्यार्थप्रतीतौ दुष्टत्वमङ्गीक्रियते तदयुक्तं स्यात् । एतदसभ्यार्थस्य अन्विताभिधानवादे पदार्थान्तरैरन-

न्वितत्वादनभिधेयतया व्यञ्जनानङ्गीकारे प्रतीत्यविषयत्वेन काव्येऽपरित्याज्यत्वं सिद्धमेव । अभिहितान्वयवादेऽपि प्रकरणादिनाऽभिधानियमनाद् व्यञ्जनां विना तदप्रतीते दुष्टत्वं केन सिद्ध्येत् ।

किञ्च यदि वाच्यवाचकव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो न स्यात् तदा असाधुत्वादीनां क्वचिदप्यननु-कूलत्वेन नित्यदोषत्वम्, श्रुतिकटुत्वादीनां शृङ्गाराननुगुणानामपि रौद्रानुगुणत्वेन अनित्यदोषत्वमिति प्रसिद्धकाव्यदोष-विभागव्यवस्था अनुपपन्ना स्यात् । व्यञ्जनाव्यापारस्य स्वीकारे तु श्रुतिदुष्टत्वादीनां रौद्रादावनुकूलत्वं शृङ्गारादौ च प्रतिकूलत्वमिति विभागव्यवस्था सम्यगुपपद्यते ।

किञ्च व्यञ्जनाऽनङ्गीकारे पर्यायेषु मध्ये कस्यचिदेव कुत्रचित् काव्यानुगुणत्वमित्यपि व्यवस्था न स्यात्, वाच्यार्थस्याविशेषात् । यथा –

**"द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥"[7]**

इत्यादौ तपस्यन्तीं पार्वतीं वटुवेषेण छलयतः शिवस्योक्तौ स्वनिन्दाप्रस्तावे 'कपालिनः' इति पदं अशुचि-बीभत्सकपालधारकतया अमङ्गलसूचनार्थं युक्तम्, न तु 'पिनाकिनः' इति पदम् (तथा सति शौर्यप्रकाशनेन प्रस्तुताननुगुणत्वम्) । व्यञ्जनास्वीकारे तु कपालिपदस्य बीभत्सालम्बनत्वेन निन्दातिशयमभिव्यञ्जयतो देव्याः शोच-नीयत्वस्योपपत्तौ काव्यानुगुणत्वमुपपादयतीति ।

अपरञ्च वाच्योऽर्थः सर्वान् विदग्धाविदग्धान् बोद्धॄन् प्रति नियमन एकरूपो भवति । व्यङ्ग्यस्तु तत्तत् प्रकरण-वक्तृ-बोद्धृ-स्वरूप-संख्या-निमित्त-कार्य-प्रतीति-कालाऽऽश्रयविषयादीनां भेदान्नानात्वं भजते । तथा हि 'गतोऽस्तमर्कः' इत्यादौ सपत्नं प्रति अवस्कन्दनावसर इति, अभिसारिकां प्रति अभिसरणमुपक्रम्यतामिति, वासक-सज्जां प्रति प्राप्तप्रायस्ते प्रेयानिति, कर्मकरं प्रति कर्मकरणान्निवर्तामहे इति, ब्राह्मणं प्रति सान्ध्यो विधिरुपक्र-म्यतामिति, पथिकं प्रति दूरं मा गा इति, गोरक्षकं प्रति सुरभयो गृहं प्रवेश्यन्तामिति, संतापभीतं प्रति संतापोऽधुना न भवतीति, वणिजं प्रति विक्रेयवस्तूनि संह्रियन्तामिति, विरहिणीं प्रति नागताऽद्यापि प्रेयानिति च अनवधि व्य-ङ्ग्योऽर्थः तत्र तत्र प्रतिभाति ।

एवमेव 'निःशेषे'त्यादौ[8] गमनस्य निषेधविध्यात्मना, 'मात्सर्यमुत्सार्ये'त्यादौ[9] वाच्यार्थस्य (पर्वतानां नितम्बाः सेव्याः आहोस्वित् विलासिनीनां नितम्बाः सेव्या इत्यस्य) संशये शान्तशृङ्गाररसप्रधानपुरुषयोरन्यतरगतोऽन्यतर-विषयको यो निश्चयः तद्रूपेण, 'कथमवनिपे' त्यादौ[10] 'रक्षणसमर्थे त्वयि हीनाङ्गैः शत्रुभिः त्वद्वल्लभायाः अप-हरणात्' वाच्या निन्दा 'सकलशत्रुविनाशनेन त्रैलोक्यविश्रुतकीर्त्तित्वाच्च' व्यङ्ग्या स्तुतिः तत्स्वरूपेण वाच्यव्य-ङ्ग्ययोः स्वरूपभेदः, वाच्यस्य व्यञ्जकत्वकारणात् पूर्वप्रतीतौ व्यङ्ग्यस्य च पश्चात्प्रतीतौ वाच्यव्यङ्ग्ययोः कालभेदः, वाच्यस्य शब्दाश्रयत्वेन व्यङ्ग्यस्य तु शब्दतदेकदेश (प्रकृतिप्रत्ययादि) तदर्थ (वाच्यलक्ष्यव्यङ्ग्यरूप) वर्णसंघटनाश्रयत्वेन च उभयोराश्रयभेदः, वाच्यस्य व्याकरणकोशादिरूपशब्दार्थशासनज्ञानेन तज्जन्यबोधकत्वज्ञानमात्रे-

णावगमः व्यङ्ग्यस्यावगमस्तु प्रकरणवक्त्रादिसहायं यत् प्रतिभायाः नैर्मल्यं (दोषगुणविवेकः) तत्सहितेन तेन चाधिकेन शब्दानुशासनज्ञानेन इति वाच्यव्यङ्ग्ययोर्ज्ञापकरूपनिमित्तभेदः, वाच्यस्य प्रतीतिमात्रस्य बोद्धृ (शाब्दज्ञानसामान्यवान्) मात्रव्यपदेशस्य व्यङ्ग्यस्य च चमत्कृत्युत्पादकस्य विदग्धजनव्यपदेशस्य करणात् कार्यभेदः, 'गतोऽस्तमर्कः' इत्यादौ अनन्तरोक्तप्रकारेण वाच्यस्य एकरूपत्वे व्यङ्ग्यस्यानेकरूपत्वात् संख्याभेदः, 'कस्स व ण होइ रोसो' इत्यादौ सखीतत्कान्तादिगतत्वेन (वाच्यार्थः नायिकाविषयः, इयं भ्रमरेण दष्टाधरा न त्वन्येन केनचिदिति च व्यङ्ग्यः नायकविषयः) विषयभेदश्च वाच्यव्यङ्ग्ययोर्भिन्नत्वं प्रतिपादयति । तदेवं विषयभेदादिविरुद्धकारणे सत्यपि वाच्यव्यङ्ग्ययोरभेदे नीलपीतादौ भेदो न स्यात् । अतः उच्यते – "अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च"[11] इति ।

किञ्च वाचकानामर्थापेक्षत्वम् । गृहीतसंकेतं सन्तमेवार्थं वाचकाः बोधयन्ति । व्यञ्जकास्तु असदेव पावनत्वादिकं तटे बोधयन्तीति नास्ति तेषामर्थापेक्षत्वम् । किं बहुना निरर्थकवर्णानामपि व्यञ्जकत्वमङ्गीकृतं सहृदयैः । अतः वाचकत्वव्यतिरिक्तं व्यञ्जकत्वम् । यन्मीमांसकैः 'यत्परः शब्दः' इत्यादिना 'सोऽयमिषोरिवे'त्यादिना चोक्तं तत्र 'वाणीरकुडङ्गु'[12] इत्यादौ 'दत्तसंकेतः कश्चिल्लतागहनं प्रविष्टः' इति प्रतीयमानार्थं बोधयित्वा 'अङ्गावसादरूपं' वाच्यं स्वस्मिन्नेव व्यङ्ग्यमनपेक्ष्य विप्रलम्भं पोषयति, चारुत्वबलेन तात्पर्यविषयीभवच्चास्वाद्य भवति । अत्र गुणीभूतव्यङ्ग्ये वाच्यस्य प्राधान्येन तात्पर्यविषयत्वम् । व्यङ्ग्यश्चात्र चमत्काराराहित्येन अप्रधानत्वेन विधेयताविरहेण अतात्पर्यविषयत्वादनभिधेयः, विधेयस्य एवाभिधेयत्वमित्युक्तत्वात् । एतेन तात्पर्यमेव व्यङ्ग्यप्रतीतौ व्यापार इति निरस्तम् । तात्पर्यविषयस्यैवाभिधेयत्वेन तद्व्यङ्ग्यस्य शब्दानभिधेयत्वापत्तिरिति तद्व्यङ्ग्यार्थे अभिधातात्पर्यवृत्त्योरुभयोरप्यभावेन कथमस्योपस्थितिरिति तदर्थमवश्यमेव व्यञ्जनाव्यापारः स्वीकर्त्तव्यः ।

एतेन काव्यप्रकाशखण्डनग्रन्थे 'भम धम्मिअ' इत्यादौ भ्रमणायोग्यत्वं वाच्यमेव, न व्यङ्ग्यत्वमिति कथयतः सिद्धिचन्द्रगणिमहोदयस्य, 'क्लृप्ताभिधाशक्त्यैव तात्पर्यवशात् समस्तवाक्यार्थावबोधसिद्धौ रसादीनां प्रतिपत्तये व्यञ्जनारूपशक्त्यन्तरपरिकल्पनमायासमात्रमि' तिचोक्तवतः[13] धनिकमतमप्यपास्तम् । तथा हि रसादिस्तु व्यञ्जितो, न त्वभिहित इति तात्पर्यगोचरो नैव भवति ।

मीमांसकानामयमेव विषयो[14] वृत्तिग्रन्थद्वारैवोपस्थाप्य खण्डितमानन्दवर्धनेन । उक्तञ्च – "तत्प्रकाशिनो वाक्यस्य वाचकत्वमेव व्यापारः सिद्ध्यतीति किमिति व्यञ्जनावृत्तिकल्पनया ? तस्मात्तात्पर्यविषयो योऽर्थः स तावन् मुख्यतया वाच्यः" इत्येवं पूर्वपक्षमुपस्थाप्य "वाचकत्वं व्यञ्जकत्वं च शब्दस्य नैको व्यापारो भवितुमर्हति यस्मात्तौ द्वौ व्यापारौ भिन्नविषयौ भिन्नरूपौ च प्रतीयत एव । तथा हि – वाचकत्वलक्षणो व्यापारः शब्दस्य स्वार्थविषयः गमकत्वलक्षणस्त्वर्थान्तरविषयः । न च स्वपरव्यवहारो वाच्यव्यङ्ग्ययोरपह्नोतुं शक्यः एकस्य सम्बन्धित्वेन प्रतीतेर-

परस्य सम्बन्धि-सम्बन्धित्वेन । वाच्यो ह्यर्थः साक्षाच्छब्दस्य सम्बन्धी, तदितरस्त्वभिधेयसामर्थ्याक्षिप्तः सम्बन्धि-सम्बन्धी ।" इति[15] तथाह लोचने -

**" वाचकत्वं गमकत्वं चेति स्वरूपतो भेदः, स्वार्थेऽर्थान्तरे च क्रमेणेति विषयस्य ।"**

एवञ्च रूपभेदोऽपि प्रसिद्ध एव । न हि या एवाभिधानशक्तिः सा एवावगमनशक्तिः, अवाचकस्यापि गीतशब्दादेः रसादिलक्षणार्थावगमदर्शनात् । न केवलमेतत् 'व्रीडायोगादित्यादौ'[16] अशाब्दस्यापि चेष्टादेरर्थविशेषप्रकाशनसिद्धेः ।

अन्यच्च वाचकत्वं शब्दैकाश्रयम्, व्यञ्जकत्वं तु शब्दाश्रयमर्थाश्रयञ्च, शब्दार्थयोर्द्वयोरपि व्यञ्जकत्वस्य प्रतिपादितत्वात् ।

तस्मात् स्थितमेतत्-व्यङ्ग्यपरत्वेऽपि वाच्यस्य न व्यङ्ग्यस्याभिधेयत्वम्, अपि तु व्यङ्ग्यत्वमेव । न वा तात्पर्यार्थस्तद्बोधने क्षमः इति सुप्रतिपादितम् । किं बहुना बहवो ध्वनिवादिन आचार्याः व्यङ्ग्यार्थमेव तात्पर्यार्थनाम्नाऽङ्गीकुर्वन्तस्तात्पर्यावृत्तेः पृथगस्तित्वमेव निषेधयन्ति ।[17] अतो व्यङ्ग्यस्तावत् शब्दानां कश्चिद्विषयोऽस्ति यो व्यञ्जनाव्यापारबोध्यः इत्यवगन्तव्यम् ।

**व्यञ्जना न लक्षणया गतार्था** - ननु मास्त्वभिधा व्यङ्ग्यार्थबोधिका लक्षणा तु तदर्थबोधिका स्यात् । तथा हि - व्यङ्ग्येषु यथा नानात्वम्, अर्थान्तरसङ्क्रमितवाच्यध्वनित्वादिविशेषव्यपदेशविषयत्वम्, शब्दार्थाधीनत्वम्, प्रकरणादिसापेक्षत्वम् - इति धर्माः दृश्यन्ते तथैव ते लक्ष्येष्वपि - इति व्यङ्ग्याः लक्ष्या एव । तथा च व्यङ्ग्यस्य लक्षणागम्यत्वमेव । यथा - "रामोऽस्मि सर्वं सहे"[18] इत्यत्र रामपदस्य सकलदुःखभाजनत्वरूपो लक्ष्यार्थः । एवमेव "रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितमि"[19] त्यत्र रामपदेन निष्करुणत्वं कैतवस्नेहवत्त्वं पौरुषपराङ्मुखत्वञ्च लक्षणया बोध्यते । तथा च "रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परामि"[20] त्यत्र खरदूषणादिनिहन्तृत्वेन लोकातिशायिपराक्रमनिधित्वमिति लक्ष्यार्थः रामपदेन गम्यते । अतः लक्षणीयोऽप्यर्थः नानात्वं भजते । अत्राप्यर्थान्तरसङ्क्रमितवाच्यध्वनित्वादिविशेषव्यपदेशहेतुश्च भवति । वाच्यवत् लक्ष्यार्थस्यावगमः न केवलं शब्दायत्तः, अपि तु मुख्यार्थबाधाद्यधीनबोधत्वादर्थायत्तश्च । यथा व्यङ्ग्यार्थावबोधे प्रकरणसापेक्षता तथैव लक्ष्यार्थस्यापि बोधे प्रकरणसापेक्षता, तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वात् । एवमेव लक्ष्यार्थव्यङ्ग्यार्थयोः साम्यत्वे लक्षणया व्यङ्ग्यार्थबोधे 'कोऽयं प्रतीयमानो नाम?' इति पूर्वपक्षकथनमसङ्गतम्, रामपदेऽत्रापि व्यञ्जनया ह्येव तत्तदर्थप्रतीतेः । यथा नानार्थशब्दस्थले अभिधेयस्य नानात्वेऽपि सङ्केतग्रहविषयीभूतस्यार्थस्य नियमेनाभिधेयत्वेन प्रतीतिः तथा लक्षणीयार्थस्य नानात्वेऽपि मुख्यार्थनियतसम्बन्धिन एवार्थस्य प्रतीतिर्जायते, नत्वनियतस्यार्थस्य । प्रतीयमानस्तु प्रकरणादिविशेषवशेन "अत्ता एत्थ णिमज्जइ" इत्यादौ नियतसम्बन्धः, कस्स व ण होइ रोसो" इत्यादौ अनियतसम्बन्धः, "विपरीअ रए लच्छी" इत्यादौ सम्बन्धसम्बन्धश्च द्योत्यत इतिकृत्वा न सकलस्य व्यङ्ग्यस्य लक्ष्यरूपता।[21]

किञ्च मुख्यार्थबाधाद्यभावात् व्यङ्ग्यस्य न लक्ष्यत्वम् । स्वीकृतायाञ्च लक्षणायां 'गङ्गायां घोष' इत्यादौ शीतत्वपावनत्वादिरूपस्य प्रयोजनस्य बोधनिमित्तं व्यञ्जना स्वीकरणीया एव, यस्माद् नैतत्प्रयोजनमभिधा शक्नोत्य-भिधातुम्, पदार्थमात्रबोधनविरतत्वात् । लक्ष्यार्थमात्रबोधनपरीक्षीणा लक्षणापि तन्न बोधयितुमलम् । उक्तञ्च काव्य-प्रकाशे – "यथा च समयसव्यपेक्षा अभिधा, तथा मुख्यार्थबाधादित्रयसमयसव्यपेक्षा लक्षणा, अत एवाभिधापुच्छभूता सेत्याहुः"[22] इति ।

अपरञ्च व्यञ्जनायाः लक्षणामूलत्वेन तद्रूपताभावान्न लक्षणारूपत्वम् । न चापि लक्षणानुगतत्वमस्याः, वि-वक्षितान्यपरवाच्ये ध्वनावभिधामूलत्वेनापि तस्याः प्रवृत्तेः । न च लक्षणाभिधोभयानुसारिणी एव सा, अवाचकानां कोमलपरुषादिवर्णानुसारेण रसव्यञ्जकत्वस्य दर्शनात् । एवञ्च न सा शब्दानुसारिणी एव, अशब्दानां कटाक्ष-क्षेपणादीनां रसव्यञ्जकत्वं सुप्रसिद्धमेव । तथा च ध्वनिकृता –"गुणवृत्तिस्तूपचारेण लक्षणया चोभयाश्रयापि भवति । किन्तु ततोऽपि व्यञ्जकत्वं स्वरूपतो विषयतश्च भिद्यते ।'' यदि वाचकत्वलक्षकत्वदीनां शब्दप्रकाराणां प्रसिद्ध-प्रकारविलक्षणत्वेऽपि व्यञ्जकत्वं प्रकारत्वेन परिकल्प्यते, तच्छब्दस्यैव प्रकारत्वेन कस्मान्न परिकल्प्यते ।"[23] इत्येतेन ग्रन्थेन स्वरूपभेदविषयभेदोभयाश्रयत्वादिभेदैः व्यञ्जनाया अभिधालक्षणाभ्यां भेदं संसाधयता विस्तरेणोपवर्णितम् । एवं स्थिते "व्यञ्जना च न वृत्त्यन्तरम्, लक्षणयैव तदर्थसिद्धेः"[24] इति न्यायसिद्धान्तमञ्जरीकारस्य, "मुखं विक-सितस्मितमित्यादौ गूढव्यङ्ग्योदाहरणे विकसितादिपदेन व्यज्यमानस्य सौरभादिरूपार्थस्य लक्षणयैव बोधः"[25] इति कथयतः जगदीशतर्कालङ्कारस्य मतमप्यपास्तम् ।

**निष्कर्ष** – तदेवं सुव्यवस्थापितो व्यञ्जनाव्यापारो न केवलं साहित्यिकैः सम्मतमपितु मीमांसक-वैया-करण-वेदान्ति-नैयायिकादीनामपि वैमत्य विषयतां याति । तदुक्तं ध्वनिकृता यथा-

**"व्यञ्जकत्वलक्षणो यः शब्दार्थयोर्धर्मः स न कस्यचिद् विमतिविषयतामर्हती"ति ।**[२६]

इति कृत्वा वस्त्वलङ्काररसरूपस्य व्यङ्ग्यस्याशक्यापलापतया अभिधादिवृत्तित्रयाबोध्यतया चानुमानावेद्यतया व्यञ्जना नूनमुपास्या इति पर्यवसितम् । अतः साधु एवोक्तं सुधासागरकारेण यद् "व्यञ्जना ब्रह्मणाप्यपलपितुमशक्ये"ति । अत एवमुच्यते –

**"पदवाक्यप्रमाणेषु व्यक्तिश्शास्त्रान्तरेष्वपि । नूनं प्रवर्त्तते सम्यग् यत्र वाणी प्रतिष्ठिता ॥"**

**सन्दर्भाः**

1. ध्वन्यालोके तृतीयः उद्योतः पृ २९७ ।
2. साहित्यदर्पणे तृतीयपरिच्छेदः ।
3. काव्यप्रकाशे पञ्चमोल्लासः पृ-२१७ ।
4. ध्वन्यालोके तृतीयः पृ १७५ ।

5. --धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी ।
**रूपे देवोऽप्ययमनुपमो दत्तपत्र स्मरस्य ॥**
**जातं दैवात्सदृशमनयोः संगतं यत् तदेतत्** । काव्यप्रकाशे दशमः पृ.७१८
6. ध्वन्यालोककौमुद्याम् पृ. ११९ ।
7. कुमारसम्भवे पञ्चमसर्गे------ ।
8. **निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो ।**
**नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।**
**मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे ।**
**वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम् ॥**
9. **मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।**
**सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥**
10. **कथमवनिप दर्पो यन्निशातासिधारादलनगलितमूर्ध्नो विद्विषां स्वीकृता श्रीः ।**
**ननु तव निहतारेरप्यसौ किं न नीता त्रिदिवमपगताङ्गैर्वल्लभा कीर्त्तिरेभिः ॥**
11. काव्यप्रकाशे पञ्चमोल्लासः पृ. - २४४ ।
12. **वाणीरकुडङ्गुड्डीणसउणिकोलाहलं सुणंतीए ।**
**घरकम्मवावडाए वहुए सीअन्ति अंगाइं ॥** काव्यप्रकाशे पञ्चमोल्लासे असुन्दरगुणीभूतव्यङ्ग्योदाहरणे
13. **तात्पर्यानतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः ।**
**किमुक्तं स्यादश्रुतार्थतात्पर्येऽन्योक्तिरूपिणि ॥**
('-----व्यञ्जनीयस्य न ध्वनिः' इति द्वितीयपादे पाठान्तरम्)
**एतावत्येव विश्रान्तिस्तात्पर्यस्येति किं कृतम् ।**
**यावत्कार्यप्रसारित्वात् ताअत्पर्यं न तुलाधृतम् ॥**
**पौरुषेयस्य वाक्यस्य विवक्षापरतन्त्रता ।**
**वक्त्रभिप्रेत तात्पर्यमतः काव्यस्य युज्यते ॥** दशरूपके अवलोकस. पृ. -२३८-२४२ (हिन्दीटीकोपेतः)
14. **वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् ।**
**पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥**
इति कुमारिलभट्टाः इति ध्वन्यालोकलोचनम्, बालप्रिया, पृ.४१५ ।
15. ध्वन्यालोके तृतीयः उद्योतः ।

16. **व्रीडायोगान्नतवदनया सन्निधाने गुरूणां**

**बद्धोत्कम्पं कुचकलशयोर्मन्युमन्तर्निगृह्य ।**

**तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य वाष्पं**

**मयासक्तश्चकितहरिणीहारिनेत्रत्रिभागः ॥** ध्वन्यालोके तृतीयः उद्योतः

17. क – प्रतापरुद्रीये विद्यानाथः – अभिधा-लक्षणा-व्यञ्जनाख्यास्तिस्रः शब्दवृत्तयः ।

गौणवृत्तिरपिलक्षणाप्रभेद एव । तात्पर्यार्थो व्यङ्ग्यार्थ एव, न पृथग्भूतः । पृ.४३-४४

ख – एकावल्यां विद्याधरः – तात्पर्यमिति व्यापारान्तरं परैरभ्युपगतम् – पृ.५६ ।

ग – भावप्रकाशे शारदातनयः – अतो ध्वन्याख्यतात्पर्यगम्यमानत्वतः स्वतः ।

**काव्ये रसालङ्क्रियादिर्वाक्यार्थो भवति स्फुटम् ॥**

एतेन – **तात्पर्यमेव वचसि ध्वनिरेव काव्येसौभाग्यमेव गुणसम्पदि वल्लभस्य ।**

**लावण्यमेव वपुषि स्वदतेऽङ्गनायाः शृङ्गार एव हृदि मानवती सहायः ॥** पृ.२२१

घ – धनिकमतमालोचयता विश्वनाथेनसाहित्यदर्पणे ग्रन्थे यथा – किमिदं तत्परत्वं नाम, तदर्थत्वं वा, तात्पर्यवृत्त्या तद्बोधकत्वं वा ? आद्ये न विवादः व्यङ्ग्यत्वेऽपि तदर्थतानपायात् । द्वितीये तु – केऽयं तात्पर्याख्या वृतिः ? अभिहितान्वयवादिभिरङ्गीकृता, तदन्या वा । आद्ये दत्तमेवोत्तरम्, द्वितीये तु नाममात्रे विवादः, तन्मतेऽपि तुरीयवृत्तिसिद्धेः। पृ.२६९

18. **स्निग्धश्यामलकान्तिलिप्तवियतोवेल्लद्बलाका घनाः**

**वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।**

**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**

**वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥** ध्वन्यालोके द्वितीय उद्योतः पृ.६२

19. **प्रत्याख्यानरुषा कृतं समुचितं क्रूरेण ते रक्षसा**

**सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः ।**

**व्यर्थं सम्प्रति विभ्रता धनुरिदं त्वद्व्यापदसक्षिणा**

**रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम् ॥** काव्यप्रकाशे बालबोधिनीटीका पृ.२४६

20. **रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-**

**मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।**

**वन्दीवैष यशांसि गायति मरुद्यसैकबाणाहतिः**

**श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥** काव्यप्रकाशे चतुर्थोल्लासः पृ.१८२ ।

21. तत्र नियतसम्बन्धो यथा–

**अत्ता एत्थ णिमज्जइ एत्थ अहं दिवसअं पलोएहि ।**

**मा पहिअ रत्तिअन्धअ सेज्जाए मह णिमज्जहिसि ॥**

इत्यत्रशयनीये मदीये रात्रावेव त्वया निभृतमागम्यतामिति व्यङ्ग्यार्थस्य वाच्यार्थेन सह नियतसम्बन्धविषयः । 'मा णिमज्जहिसी'त्यत्र 'णिमज्जहिसी'ति वैपरीत्यात् विरुद्धः सम्बन्धः । स च प्रसिद्धत्वात् नियतः । नियतसम्बन्धश्च तेन वाक्येन सह ज्ञाप्यत्वरूपसम्बन्धनियमः । तद्वाक्यजन्यज्ञानविषयत्वनियम इत्यर्थः ।

**कस्स वा ण होइ रोसो दट्ठूण पिआए सव्वनं अहरम् ।**

**सभमरपउमग्घाइणि वारिअवामे सहसु एण्हिम् ॥**

अत्र सखीतत्कान्ताद्यनेकविषयत्वादनियतानां व्यङ्ग्यार्थानां वाच्यार्थेन सह न कोऽपि प्रसिद्धः सम्बन्धः ।

**विपरीअ रए लच्छी बम्हं दट्ठूण णाहिकमलठ्ठम् ।**

**हरिणो दाहिणणअणं रसाउला झत्ति ढकेइ ॥**

अत्र हरिपदेन दक्षिणनयनस्य सूर्यात्मकता, तन्निमीलनेन सूर्यास्तसमयः, तेन पद्मसङ्कोचः, ततो ब्रह्मणो स्थगनम्, तथा सति गोपनीयाङ्गस्य अदर्शनेन अप्रतिबन्धसुरतविलास इति सम्बन्धेन (निर्वाह्यनिर्वाहकतया) सम्बन्धः ।

22. काव्यप्रकाशे पञ्चमोल्लासः पृ.२४७ ।

23. ध्वन्यालोके तृतीय उद्योतः पृ. ४२३-४२८ ।

24. साहित्यसारे सरसामोदव्याख्यायाम् पृ.६० ।

25. शब्दशक्तिप्रकाशिकायाम् (कृष्णकान्तटीकासहितायाम्) पृ.१४४ ।

26. ध्वन्यालोके तृतीयोद्योतः पृ. ४३६ ।

**सहायकाचार्यः (साहित्यविभागः)**
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
**क. जे. सोमैयापरिसरः**
**विद्याविहारः, मुम्बई ।**



# व्याकरणे कर्मसंज्ञाविचारः

✍ डॉ. सुभाषचन्द्रमीणा

**( कारकप्रकरणे कर्मसञ्ज्ञाविषयको भूयान् विचारः प्रवर्त्तते । पाणिनिसूत्रात् परं कृतवार्त्तिकमहाभाष्यादितात्पर्य्यं गृहीत्वा भट्टदीक्षितः स्वसिद्धान्तकौमुद्यां कारकसम्बन्धीनि सूत्राण्याश्रित्य वृत्त्युदाहरणादिद्वारा कारकतत्त्वं समुपस्थापयामास । प्रस्तुते निबन्धे तदेव तत्त्वं कर्मकारकविषयकं लेखकेन प्रस्तोतुं प्रयासः कृतः ।)**

**शोधसारः** - संसारे व्यक्तेः जातीनां, वस्तूनां, स्थानानां, भावानां च नामानि संज्ञा भवति । 'आदिरन्त्येन' सूत्रे अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् इत्युक्तम्[1] कारकाधिकारे कर्मकरणसम्प्रदानापादानधिकरणप्रभृतय अनेकाः संज्ञाः सन्ति, तासु तासु कर्मसंज्ञाविधानार्थं भूयांसि सूत्राणि पाणिनिना प्रणीतानि सन्ति । अनेकैः वार्त्तिकैः अपि कर्मसंज्ञायाः विधानं समुपलभ्यते । कर्मसंज्ञेति विषयमाश्रित्य व्याकरणस्य सिद्धान्तकौमुदी-प्रौढमनोरमा-परमलघुमञ्जूषा-वैयाकरणभूषणसार-वाक्यपदीय-महाभाष्य-प्रभृतिषु प्रमुखग्रन्थेषु चर्चा समुपलभ्यते । अष्टाध्याय्यां प्रथम अध्याये संज्ञासूत्राणि पाणिनिना संज्ञिनां बोधाय कृतानि । प्रथमाध्याये वृद्धिरादैच्[2] इति सूत्रमारभ्य विरामोऽवसानमिति दशाधिकं शतं सूत्राणि सन्ति । एष्वधिकं संज्ञासूत्रमस्ति । व्याकरणशास्त्रे उक्तं च -

**संज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥**[3]

अत्रापि संज्ञायाः प्रथमं स्थानं निगदितमस्ति ।

**सङ्केतशब्दाः** - ईप्सिततमम्, कर्मसंज्ञा, व्याप्तिः, तमप्, अनीप्सितम्, गत्यर्थकः, अकर्मकः ।

**प्रस्तावना** - कर्मणः निर्धारणविषये त्रयः पन्थानः शास्त्रे प्रमुखाः सन्ति- प्रथमः फलाश्रयः कर्म, द्वितीयः संज्ञापरः, तृतीयस्तु क्रियापरः । वैयाकरणभूषणसारे फलाश्रयः कर्म इति विषये उक्तञ्च -

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृता : । फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥**[4]

अत्र फलव्यापारयोः अर्थे धातुः प्रसिद्धः । फलाश्रयः कर्म, व्यापाराश्रयः कर्ता भवति इति । एतदेव स्पष्टयति 'लः कर्मणि च भावे चाकर्मकेभ्यः'[5] इति पाणिनिसूत्रमपि ।

संज्ञापरः कर्म - ईप्सिततमस्य, अनीप्सितस्य, अपादानदिविशेषैरविवक्षितस्य ण्यन्तावस्थायाः प्रयोज्यकर्तुः अधिपूर्वकशीङ्स्थासां धातूनाम् आधारस्य च कर्म संज्ञा भवति ।

क्रियापरः कर्म - भट्टोजिदीक्षितः तिङन्तात्मनेपद क्रियेतिप्रप्रकरणे 'कर्तरि कर्मव्यतिहारे' इति सूत्रार्थं स्पष्टयन् आह क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् । अत्र कर्मव्यतिहार इत्यस्यार्थः क्रियाविनिमय इति । यथायोग्यं लवनमन्यः करोति इति एतेन कर्मशब्दस्य क्रियापरत्वं सिद्ध्यति । 'कर्तुरीप्सिततमं कर्म'[6] इति सूत्रेण

ईप्सिततमस्य कर्मसंज्ञा विधीयते । यथा भक्तो हरिं भजति, अत्र हरिः ईप्सिततमः यतो हि परिचरणात्मकव्यापारेण भक्तः हरिं तोषयति तस्माद् हरेः कर्मसंज्ञा ।

ईप्सिततमं कर्म निर्वर्त्यम् इति अर्थेन पटं करोति, घटं करोति, ग्रन्थं करोति, उदाहरणानि संभवन्ति। मृत्तिकायां कुम्भकारस्य यत्नपूर्वं घटः आकाररूपेण नासीत् किन्तु यत्नेन घटः जातः । एतद् रूपेण व्याकरणे स्वीक्रियते ।[7] सांख्यशास्त्रे निर्वर्त्यविषये, सती व विद्यमाना वा प्रकृतिः परिणामिनी, यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते इति ।

विकार्यम् प्रकृतिविकृतिरूपञ्च द्विविधम् । प्रकृतिरूपं विकार्यं कर्म यथा 'सुवर्णं कुण्डलं करोति' अत्र कुण्डलः स्वप्रकृतेः सुवर्णस्य उच्छेदं न करोति, अन्यदुदाहरणमस्ति काष्ठं भष्म करोति । कौण्डभट्टः विकार्य-विषये स्पष्टयति यथा यस्मिन् वस्तुनि दर्शनेन अनुमानेन वा भिन्नता न परिलक्ष्यते । तद्वस्तु प्राप्यकर्मणः उदाहरणत्वेन स्वीकर्तुं शक्यते । यथा घटं पश्यति ग्रामं गच्छति । अत्र दर्शनेन अनुमानेन वा घटे भिन्नता न जायते तस्माद् 'घटं पश्यति' इत्यत्र घटः प्राप्यम् ईप्सिततमं कर्म विद्यते । प्रमाणरूपेण उक्तञ्च -

**क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद् वा तत्प्राप्यमिति कथ्यते ॥**[8]

अनीप्सितकर्मणो विषये व्याकरणशास्त्रे चतुर्विधाः वर्तन्ते । वाक्यपदीयकारोऽपि अनीप्सितशब्दस्य व्याख्यां कुर्वन् स्पष्टयति । उदासीनं कर्म यथा 'तथायुक्तं चानीप्सितमि'ति सूत्रार्थम् । 'ग्रामं गच्छन्[9] तृणं स्पृशति'। अत्र गमनकर्तुः उद्देश्यं ग्रामप्राप्तिरिति न तृणस्पर्श इति तथापि तृणं इत्यस्य कर्मसंज्ञा भवति । अत्र तृणम् उदासीनं कर्म अस्ति । अन्यच्च ओदनं मुञ्जानः विषं भुङ्क्ते अत्रापि विषम् उदासीनमस्ति । अत्र विषस्य ईप्सिततमाभावे अनीप्सितकर्मसंज्ञा स्यात् । द्वेष्यकर्मणः ओदनं भुञ्जानः विषं भुङ्क्ते इत्यत्र विषम् इति उदाहरणमस्ति । विषस्य द्वेष्यतया ईप्सिततमत्वाभावे अनीप्सितसत्वे च कर्मसंज्ञा संज्ञान्तरैरनाख्यातम् दुह्याच्पच्दण्डिति षोडशधातूनां प्रयोगे अपादानादिसंज्ञाभिः अविवक्षां कृत्वा कर्मत्वेन यस्य कारकस्य विवक्षा क्रियते तत्र संज्ञान्तरैरनाख्यातं कर्म निगद्यते । 'अकथितं च'[10] इति सूत्रार्थम् अन्यपूर्वकं कर्म इति विषये क्रूरम् अभिक्रुध्यति अभिद्रुह्यति इति उदाहरणं द्वयम् अन्यपूर्वककर्मण इति । क्रुधद्रुहोरकर्मकत्वात् क्रूर इत्यस्य कर्मत्वं न सम्भवति किन्तु अत्र उपसर्गबलात् सकर्मकत्वं संसाध्य अन्यपूर्वककर्मत्वं संसाध्यते एवं कर्मशब्दः संज्ञापरः फलाश्रयः क्रियापरश्चेति वक्तुं शक्यते । तार्किका-नुसारेण आकुञ्चनप्रसारणोत्क्षेपणाक्षेपणगमनात्मिकां क्रियां कर्म स्वीकुर्वन्ति ।

कर्मसंज्ञाविधानार्थं पाणिनिना कर्त्तुरीप्सिततमं कर्म, अकथितं च, गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मका-णामणि कर्ता स णौ, हृक्रोरन्यतरस्यां[11] अभिनिविशश्च, उपान्वध्वाङ्वसः, दिवः कर्म च, अधिशीङ्स्थासां कर्म इत्यादीनि सूत्राणि प्रणीतानि । संक्षेपेण कर्तुरीप्सिततमं कर्म अत्र कर्तुः षष्ठ्यन्तम्, ईप्सिततमं प्रथमान्तं, कर्म अपि

प्रथमान्तमिति कर्मसंज्ञाविधायकसूत्रमिदं पदत्रयात्मकमिति । सूत्रेऽस्मिन् कारके इति अधिकारसूत्रमनुवर्त्तते । कारके सप्तम्यन्तं पदम् इत्यनुवृत्तं प्रथमया विपरिणम्यते । तदेव कारकं सत् कर्मसंज्ञम् इति सूत्रार्थो जायते ।

कारकमिदं यौगिकमस्ति तदेव करोति कर्तृकर्मकरणादिव्यपदशान् इति कारकम् अथवा क्रियान्वयित्वम्, क्रियाजनकत्वम्, क्रियासम्पादकत्वम्, क्रियानिष्पादकत्वं वा कारकत्वं शास्त्रे प्रसिद्धम् । कारकस्य यौगिकपरत्वात् कारकात् लभ्यते क्रियापदम्, सिद्धान्तकौमुद्यां कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् कर्तुरीप्सिततम् इति सूत्रार्थः । कर्तुः सूत्रे कर्तुरिति अत्र षष्ठी कर्तरि विद्यते । 'क्तस्य च वर्तमाने' इति सूत्रेण क्तसन्निधानात् कर्तुरिति षष्ठी ।

'धातोः कर्मणः समानकर्तृकादिच्छायां वा' सूत्रेण सन् प्रत्ययः भवति । मतिबुद्धिपूजार्थेभ्यश्च इत्यनेन क्त प्रत्ययः, अतिशायने तमबिष्ठनौ सूत्रेण तमप् प्रत्ययः तथा च शेषे प्रक्रियात्मके कार्ये कृते सति ईप्सिततमशब्दस्य साधुत्वं जायते । आप्तुः सम्बन्द्धुम् इष्यमाणम् इच्छाविषयीभूतं कारकं सत् कर्मसंज्ञकं स्यात् इति । अत्र प्रश्नः अस्ति यत् केन आप्तुम् इति तदा क्रियया, क्रियापदस्य कारकात् लाभः इति । अर्थात् कर्तुः क्रियया आप्तुम् इष्टतमं कारकं कर्मसंज्ञं स्यात् इति वृत्तिं दीक्षितः व्यरचयत् । सूत्रे कर्तुरिति पदं किमर्थम् स्वयं दीक्षितः प्रोवाच यत् माषेषु अश्वं बध्नाति, इत्यत्र माषस्य कर्मसंज्ञा मा भूत् । यतोहि, सूत्रे कर्तृपदाभावे क्रियया आप्तुम् इष्टतमं कर्मसंज्ञकम् इति अर्थे जाते अश्ववृत्तिक्रियया इष्यमाणस्य माषस्य कर्मसंज्ञायाप्राप्तिः जायते । येन माषम् अश्वं बध्नाति इति अनिष्टप्रयोगापत्तिः । अत्र सूत्रे कर्तृपदप्रदानन माषस्य कर्मसंज्ञा न सम्भवति यतोहि कर्तुं क्रियया इष्यमाणस्य कर्मसंज्ञा न तु कर्मणः क्रियया ईप्सिततमस्य कर्मसंज्ञा इति । माषस्तु कर्मणा ईप्सितः इति । ईप्सिततम इत्यत्र तमप् प्रत्ययः अत्र दीक्षितेन 'तमब्ग्रहणं किम्' इति प्रश्नयति – तर्हि अस्मिन् विषये कथयति – 'पयसा ओदनं भुङ्क्ते ।'[13] अत्र पयसः ईप्सितस्य कर्मसंज्ञा न भवेत् इति । तमप् इति प्रत्ययः, तमप् प्रत्ययेन प्रत्ययान्तस्य ईप्सिततमस्य सूत्रे ग्रहणं किमर्थमिति प्रश्न आसीत् तात्पर्यं अवयवद्वारा समूहे प्रश्न इति । यदि तमप् अन्तम् ईप्सिततमं ग्रहणं न विधीयते चेत् तर्हि कर्तुः उद्देश्यं कर्म इति एव अस्ति । भोजनकर्ता न केवलं पयः पानेन तुष्यति, नापि केवलौदनेन किन्तु पयोलाभलोभेन ओदनं भुङ्क्ते इति भावः । अत्राशये तमबन्ताभावे पयस् इत्यस्य कर्मत्वप्राप्तिः, सति तमप्प्रत्यये ईप्तितमत्वाभावात् कर्मसंज्ञा न सम्भवति । वस्तुतः भाष्यकारः अग्नेर्माणवकं वारयतीति प्रयोगे माणवकस्यापादानत्वनिवृत्त्यर्थं तमप् ग्रहणम् इति प्राह ।

तमब्ग्रहणविषये पतञ्जलिः वदति व्याकरणशास्त्रे सूत्रेषु अदृष्टस्य पदस्य सूत्रार्थसम्पादनाय सूत्रान्तरात् अनुवृत्तिः क्रियते एवं कर्तुरीप्सिततमं सूत्रतः पूर्वम् अधिशीङ्स्थासां कर्म इति सूत्रम् अष्टाध्याय्यां पाणिनिना व्यवस्थापितमिति । वर्णलाघवदृष्ट्या कर्मपदानुवृत्त्या कर्मपदलाभः संभवति सूत्रे कर्मग्रहणं किमर्थमिति?

अस्मिन् विषये सिद्धान्तकौमुदीकारेण अनुवृत्तस्य कर्मणः पदस्यार्थः आधार इति अर्थात् आधारत्वार्थ-विशिष्टस्य कर्मपदस्य अनुवृत्तौ कर्तृरीप्सिततम इति सूत्रेण गेहं प्रविशति प्रयोगे कर्मत्वं सम्भवति, हरिं भजति प्रयोगे हरेः आधारत्वाभावात् कर्मत्वं न सम्भवति । तस्माद् सूत्रे कर्मग्रहणं पाणिनिना कृतमिति । कर्मसंज्ञायाः फलं किम् इति ? अत्र कर्मणि द्वितीया विभक्तिः भवति सैव फलम् । यथा भक्तः हरिं भजति प्रयोगे, अत्र भक्तः कर्ता, हरिम् कर्म तथा च भजति क्रिया इति ।

नागेशभट्टोऽपि मञ्जूषायां[14] कर्तुरीप्सिततमं कर्म इति सूत्रस्य सविस्तरं विवेचम् अकरोत्, यथा गां पयो दोग्धि, प्रयागात् जयपुरं गच्छति, जयपुरं गच्छति न चेत् इति आदीनि वाक्यानि विचिन्त्य कर्मत्वस्य परिष्कारं विदधाति । भट्टेन प्रकृतधात्वर्थप्रधानीभूतव्यापारपयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वं कर्मत्वमिति । अर्थात् प्र-कृतधात्वर्थप्रधानभूतः यो व्यापारः तत्प्रयोज्यं यत्प्रकृतधात्वर्थफलम् तत्फलाश्रयत्वेनोद्देश्यत्वं कर्मत्वमिति । भक्तः हरिं भजति[15] इत्यत्र समन्वयः कर्तुं शक्यते - भक्तः हरिं भजति अस्मिन् वाक्ये भज् धातु प्रकृतधातुः, तदर्थप्र-धानीभूतः तुष्ट्यनुकूः परिचरणात्मकः व्यापारः, तद्व्यापारप्रयोज्यं प्रकृतधात्वर्थफलं तुष्टिरूपं फलं, तद् आश्रय-त्वेनेतत् उद्देश्यत्वस्य हरेः इति कारकं सत् कर्मसंज्ञा विधीयते । ईप्सिततमस्य कर्मसंज्ञायाः विधानान्तरम् अनी-प्सितस्यापि भवति कर्मसंज्ञ । 'तथायुक्तं चानोप्सितम्'[16] अत्र अनीप्सितं चतुर्विध भवति अस्मिन् विषये पूर्वोक्तं, सूत्रस्यार्थं विधीयते यत् ईप्सिततमवत्क्रियया युक्तम् अनीप्सितमपि कारकं सत् कर्मसंज्ञां भवति इति । अत्र सूत्रे 'तथा' इति पदेन कर्तुरीप्सिततमं कर्म सूत्रतः ईप्सिततमम् इति परामृश्यते अनुवृत्तकारकात् लभ्यते क्रिया पदम्, ततः ईप्सिततमम् इति परामृश्यते । अनुवृत्तकारकात् लभ्यते क्रिया पदम्, ततः ईप्सिततमवत् क्रियया इति वृत्तौ भट्टेन योजितम् । अनीप्सितम् इति पदं तु सूत्रे अस्मिन् पूर्वमेव विद्यमानमस्ति । अस्य सूत्रस्य उदाहरणद्वयं ग्रन्थकारेण प्रदत्तम् - प्रथमं तु ग्रामं गच्छन् तृणं स्पृशति, अत्र ग्रामस्य कर्मसंज्ञा 'कर्तुरीप्सिततमं कर्म' इति सूत्रेण तृणम् इत्यत्र ईप्सिततमत्वाभावात् तेन सूत्रेण न सम्भवति तस्मात् गच्छन् इति ईप्सिततमवत् क्रियया युक्तस्य अनीप्सितस्य तृण इत्यस्य कर्मसंज्ञा तथायुक्तं चानीप्सितमिति शास्त्रेण । ग्रामं गच्छन् तृणं स्पृशति अनीप्सितकर्मण उदाहरणमिदम् । अस्य सूत्रस्य ग्रन्थकारः द्वितीयमुदाहरणम प्रददाति - ओदनं भुञ्जानो विषं भुङ्क्त इति । अत्र ओदनस्य कर्मसंज्ञा कर्तुरीप्सिततममिति सूत्रेण, अनीप्सितस्य विषस्य कर्मसंज्ञा तथायुक्तं चानीप्सितमिति शास्त्रेण । निश्चयेन कश्चित बलवता शत्रुणा निगृह्यमाणो विषयं भुङ्क्त इति ।

'अकथितं च'[17] इति सूत्रेण संज्ञान्तरैः अनाख्यातस्य अनीप्सितस्य कर्मसंज्ञा विधीयते । सूत्रार्थं ब्रवीति दीक्षितः अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञ स्यात् । अपादानादिविशेषैरित्यस्य तात्पर्यमस्ति यद् 'साधकतमं करणम्', 'ध्रुवमपायेऽपादानम्', 'कर्मणा यमभिप्रैति स सम्प्रदानं' प्रभृतिभिः सूत्रैः कृतानां करणसम्प्रदानपादानादीनां संज्ञानाम् वक्तुः अविवक्षा इति दुह्याच् दण्ड रूधिप्रच्छि इति षोडश धातूनां योगे अपादानत्वादेः अविवक्षां कृत्वा

कर्मत्वेन विवक्षा क्रियते इत्यर्थकमिदं सूत्रम् । षोडशधातूनां दीक्षितः संग्रहमकरोत् -

**दुह्याचपचदण्डरुधिप्रच्छिचिब्रुशासुजिमथ्मुषाम् ।**
**कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥[१८]**

कारिकायां दुह्याच् इति षोडशधातूनां योगे यः कर्मयुक् भवति तस्य अपादानत्वादिनाऽविवक्षा कर्मत्वेन विवक्षा इति । कर्मयुक् इत्यस्य तात्पर्यं कर्मणा यद् उच्यते । 'सत्सुद्विषद्रुहदुह'[19] इति सूत्रेण कर्मणि उपपदे युज् धातुः क्विपि, सर्वापहारलोपे सति कर्मयुक् इत्यस्य निष्पत्तिः भवति । 'गोपः गां पयो दोग्धि' इति वाक्ये फला-श्रयः पयः तत् तु गवि विद्यते एवं कर्मयुक् गौरस्ति । इत्थं दुह्धातोः सन्निधाने कर्मयुक् गौरस्ति । इत्थं दुहधातोः सन्निधाने कर्मयुक् गौरित्यस्य अपादानत्वेन अविवक्षा कर्मत्वेन विवक्षा तदेव गां पयः दोग्धि इत्यस्य साधुत्वमिति । क्रमेण षोडशधातूनामुदाहरणानि प्रदर्श्यन्ते बलिं याचते वसुधाम् - टुयाचृ याच्ञायाम् धातोः लटि रूपं याचते इति । प्रयोगेऽस्मिन् फलाश्रयत्वेन कर्तुरीप्सिततममिति सूत्रेण वसुधा इत्यस्य कर्मसंज्ञा तस्मात् प्रधानं कर्म 'वसुधाम्' इति, एतादृशकर्मयुक् अपादानसंज्ञकं पदं बलि इति तदपादानत्वस्य अविवक्षां कृत्वा कर्मत्वेन च विवक्षां विधाय बलिं वसुधां याचत इत्यत्र द्विकर्मकत्वसिद्धिः। अविनीतं विनयं याचते - अत्र विनयस्य कर्मसंज्ञा फलाश्रयत्वेन कर्तुरी-प्सिततममिति सूत्रेण, अविनीतपदस्य कर्मसंज्ञा अकथितं चेति शास्त्रेण यतोहि - यदा कोऽपि बलवान् अविनी-तोऽस्ति तथा दुर्बलं बाधते, तदा दुर्बलः जनः प्रार्थयति तस्मिन् सन्दर्भे वाक्यमिदम् । अत्र आपादानत्वेन अविवक्षा कर्मत्वेन विवक्षा तदा अविनीतं विनयं याचत इति प्रयोगसाधुत्वम् ।

तण्डुलान् ओदनम् पचति अत्र तण्डुलशब्दः बहुवचने, ओदनस्तु एकवचने त एव तण्डुलाः विक्लित्यादेः व्यापारानन्तरं ओदनाः परिवर्तिताः भवन्ति तथापि विषमवचनविधाने संशयः न करणीयः यतोहि पाणिनिनापि 'झलां जश् झशि' एतादृशस्थलेषु विषमवचनस्याश्रयः गृहीतः । विक्लित्त्यनुकूलव्यापारः पच्धातोरर्थः । अत्र विक्लित्त्या-श्रयः ओदनः स प्रधानकर्म, प्रकृतिभूतैः तण्डुलैः ओदनम् करोति इत्याशये तण्डुल इत्यत्र करणत्वेनाविवक्षा कर्मत्वेन विवक्षां संसाध्य तण्डुलान् ओदनं पचतीति । गर्गान् शतं दण्डयति इत्यत्र गर्गपदस्य अपादानत्वेन व्रजम् अवरुणद्धि गाम् अत्र व्रजपदस्य अधिकरणत्वेन, माणवकं पन्थानं पृच्छति, इत्यत्र माणवकस्य सम्प्रदानत्वेन, वृक्षम् अवचिनोति फलानि प्रयोगे वृक्षस्य अपादानत्वेन माणवकं धर्मं ब्रूते शास्ति वेत्यत्र माणवकस्य सम्प्रदानत्वेन शतं जयति देवदत्तम् वाक्ये देवदत्तपदस्य अपादानत्वेन, सुधां क्षीरनिधिः मथ्नाति इत्यत्र सुधापदस्य सम्प्रदानत्वेन, देवदत्तं शतं मुष्णाति इति वाक्ये देवदत्तस्य अपादानत्वेन गाम् अजां नयति, हरति, कर्षति, वहति, वेत्यत्र ग्रामपदात् अपादानत्वेन च अविवक्षां कृत्वा कर्मत्वेन विवक्षा क्रियते' इति ।

अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् (वा)[21] अकर्मक-धातुयोगेऽपि देशकालभावगन्तव्योऽध्ववाचकानां कर्मसंज्ञा भवति । प्रस्तुतवार्त्तिकमादाय चत्वारि उदाहरणानि दीक्षितैः

प्रदत्तानि-कुरून् आस्ते । अत्र कुरूशब्दः ग्रामसमूहवाचकत्वेन देशवाचकः तथा च अस् धातुः अकर्मकः इत्थं कुरुशब्दस्य कर्मसंज्ञा तदा कुरुन् आसते इति । एवं कालवाचकस्य - मासमास्ते, क्रियावाचकस्य गादोहमास्ते गन्तव्यस्य अध्वनः वाचकस्य क्रोशमास्ते इत्युदाहरणानि सन्ति इति। 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ'[22] इति सूत्रेणापि गत्यर्थानां प्रयोज्यकर्तुः ण्यन्तावस्थायां कर्मसंज्ञा भवति ।

**सूत्रार्थः** - गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् । सूत्रेऽस्मिन् पंचावयवाः सन्ति येषामवबोधः सूत्रघटकपदानां विग्रहेण स्पष्टो भवतीति । नणौ, अणौ, अणौ कर्ता णौ कर्मसंज्ञक इति । गत्यर्थकस्योदाहरणम् - शत्रून् अगमयत् स्वर्गम्, अत्र श्रीहरिः प्रेरितवान् शत्रवः स्वर्गम् अगच्छन् अत्र स्वर्गस्य कर्मसंज्ञा 'कर्तुरीप्सिततमं कर्म' इति सूत्रेण, ण्यन्तावस्थायां प्रयोज्यकर्तुः शत्रुरित्यस्य कर्मसंज्ञा । अन्यच्च - वेदार्थं स्वान् अवेदयत् अत्र प्रयोज्यकर्तृणां स्वेषां गतिबुद्धिः शास्त्रेण कर्मत्वम् । आशयत् अमृतं देवान् इति अत्र ण्यन्तावस्थायाः प्रयोज्यकर्तृणां देवानां कर्मत्वमिति । वेदम् अध्यापयद् विधिम् इति - अत्र प्रयोज्यकतुः विधेः कर्मत्वम् प्रथमव्यापाररूपफलाश्रयत्वेन वेदस्य कर्मत्वमिति । आसयत् सलिले पृथ्वीम् - अत्र सलिते पृथ्वी आस्ते पृथ्वी अण्यन्तावस्थायाः क्रिया आस्ते, प्रयोज्यकर्तृणां पृथिव्याः कर्मत्वे आसयत् सलिले पृथ्वीम् इति ।

'अधिशीङ्स्थासां कर्म'[23] इति सूत्रेण अधिशेते अधितिष्ठति अध्यास्ते एषाम् आधारः वैकुण्ठः इति तस्य कर्मसंज्ञा । 'अभिनिविशिश्चेति' सूत्रेण अभिनिवशते सन्मार्गम् इत्यत्र आधारभूतस्य सन्मार्गस्य कर्मत्वम् आपद्यते । वैकुण्ठं उपवसति हरिः अत्र वैकुण्ठस्य 'उपान्वध्याङ्वसः'[25] इति सूत्रेण कर्मसंज्ञा विधीयते । 'दिवः कर्म' इति सूत्रेणाऽपि अक्षैः अक्षान् वा दीव्यति इति प्रयोगे कर्मत्वम् ।

कर्मसंज्ञायाः फलं 'कर्मणि द्वितीया'[26] इति सूत्रेण कर्मण्यर्थे द्वितीयाविभक्तेः विधानमिति वस्तुतः कारकाधिकारे यावन्ति सूत्राणि तेषां विभक्तिविधानं प्रयोजनं नास्ति, किन्तु द्वितीयादेः विभक्तेः कोऽर्थः इति निर्धारयन्ति कारकस्थसूत्राणि इति, अत्र सिद्धान्तकौमुदीमाश्रित्य कर्मसंज्ञानिरूपणं विहितम् इति ।

**सन्दर्भाः**

1. वैयाकरणसिद्धान्तकौमुदी सूत्र - 2 (1.1.71)।
2. अष्टाध्यायी (1.1.1) ।
3. लघुसिद्धान्तकौमुद्याः भूमिकायाम् ।
4. वैयाकरणभूषणसो धात्वर्थ प्रकरणे ।
5. अष्टाध्यायी 3/2/123 ।
6. सिद्धान्तकौमुद्यां कारकप्रकरणे ।
7. सांख्यदर्शने ।

8. वैयाकरणभूषणसारे सुबर्थप्रकरणे ।
9. सिद्धान्तकौमुद्यां कारकप्रकरणे ।
10. अष्टाध्यायी (1/4/51) ।
11. अष्टाध्यायी (1/4/53) ।
12. अष्टाध्यायी (3/1/7) ।
13. सिद्धान्तकौमुद्यां कारकप्रकरणे ।
14. परमलघुमञ्जुषायाम् ।
15. सिद्धान्तकौमुद्यां कर्मकारके ।
16. अष्टाध्यायी (1/4/50) ।
17. वैयाकरणसिद्धान्तकौमुद्यां कर्मकारक प्रकरणे ।
18.
19. वैयाकरणसिद्धान्तकौमुद्यां कारकप्रकरणे ।
20. अष्टाध्यायी (8/4/53) ।
21. वैयाकरणसिद्धान्तकौमुद्यां कारकप्रकरणे ।
22. अष्टाध्यायी (1/4/52) ।
23. अष्टाध्यायी (1/4/53) ।
24. अष्टाध्यायी (1/4/6) ।
25. अष्टाध्यायी (1/4/53) ।
26. सिद्धान्तकौमुद्यां कारकप्रकरणे (2/3/2) ।

**सहायकाचार्यः, व्याकरणविभागः**
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
**क.जे. सोमैया परिसरः,**
**विद्याविहारः, मुम्बई ।**

☆☆☆

# महिमभट्टसम्मतानौचित्यस्य शब्दशास्त्रीयं बीजम्

✍डॉ. दयारामदासः

**(विद्यावतोऽविद्यावतश्च मिथो यदन्तरं तस्य नामौचित्याऽनौचित्यविवेकः । तदेव कज्जलं चक्षुष्तटे शोभाधायकम्, अन्यत्र च शोभाविनाशकमिति न तिरोहितं वचः । प्रकृतनिबन्धे श्रीमहिमभट्टसम्मतानि षडनौचित्यानि व्याकरणशास्त्रीयबीजप्रदर्शनसहितानि विमृष्टानि । भारतीयं शब्दशास्त्रं शब्दानुशास्त्येव, तत्रैवार्थानपीदं बहुधा व्यवस्थापयितुं क्षमत इति निबन्धस्यास्य हृद्यम् । वस्तुतो गवेषकैः सामर्थ्य-सम्पन्नैर्भाव्यम्, पाषाणादपि सलिलं स्यन्दयितुं शक्यम् ।)**

राजानकश्रीमहिमभट्टप्रणीतो व्यक्तिविवेकः काव्यशास्त्रीयग्रन्थो वर्तते । अस्मिन् ग्रन्थे त्रयो विमर्षाः सन्ति। तत्र मया महिमभट्टसम्मतानौचित्यस्य शब्दशास्त्रीयं बीजम् उपस्थाप्यते ।

श्रीमहिमभट्टसम्मतानि षड् अनौचित्यानि सन्ति । १. विधेयाविमर्षः, २. प्रक्रमभेदः, ३. क्रमभेदः, ४. पौनरुक्त्यम्, ५. वाच्यावचनम्, ६. अवाच्यवचनञ्च ।

तत्र प्रथमम् अनौचित्यं वर्तते विधेयाविमर्षः – विधेयः प्राधान्येन प्रतिपिपादयिषितो योऽर्थस्तस्य अविमर्षो–ऽननुसन्धानम् उपसर्जनीकरणात् । यथा –

**संरम्भः करिकीटमेघशकलोद्देशेन सिंहस्य यः**
**सर्वस्यैव स जातिमात्रनियतो ह्येवाकलेशः किल ।**
**इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽप्यसंरब्धवान्**
**योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिकाकेसरी ॥**

अस्मिन् श्लोके त्रिषु स्थलेषु विधेयाविमर्षो वर्तते । प्रथमम् असंरब्धवान् इत्यत्र नञ् समासो वर्तते । सः समीचीनो नास्ति । अत्र पर्युदासप्रतिषेधोऽपेक्षितो नास्ति, प्रसज्यप्रतिषेधोऽपेक्षितो वर्तते । यत्र विधेः प्राधान्यं भवति तत्र पर्युदासो भवति । यत्र निषेधस्य प्राधान्यं भवति तत्र प्रसज्यप्रतिषेधो भवति । तथा हि –

**द्वौ नञौ समाख्यातौ पर्युदासप्रसज्यकौ ।**
**पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥ 1 ॥**
**प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता ।**
**पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ 2 ॥**
**अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।**
**प्रसज्यस्तु स विज्ञेयः क्रियया सह यत्र नञ् ॥ 3 ॥**

असमस्तस्य नञः क्रियया सम्बन्धे निषेधस्य प्राधान्यम् । अत्र "संरब्धवान् न भवति" इति विवक्षितं किन्तु नञः संरब्धवत्पदेन समासात् निषेधार्थो गुणीभूत इति विधेयस्य प्रतिषेधस्य प्राधान्येनाप्रतीत्या विधेयाविमर्षोऽत्र ।

**द्वितीयं स्थलं** – "योऽसौ कुत्र" अस्मिन् वाक्ये तत् पदं न प्रयुक्तं यत्तदोर्नित्यसम्बन्धो भवति । अतः तत्पदस्य विमर्षाभावेन विधेयाविमर्षदोषोऽत्र ।

**तृतीयं स्थलम्** – 'अम्बिकाकेसरी' अत्र अम्बिकासम्बन्धस्य प्राधान्येन विवक्षितत्वेऽपि समासे गुणीकरणाद् विधेयाविमर्षः "अम्बिकायाः केसरी" इति व्यस्त एव प्रयोगे शब्दशक्तिस्वाभाव्येन अम्बिकासम्बन्धः प्राधान्येन प्रतीयते । समासे त्वेकार्थीभावेन पांशूदकवत् पदार्थयोः मिश्रणात् प्राधान्याप्राधान्ययोर्विवेकः कर्तुं न शक्यते ।

एवं निर्दोषः सम्पूर्णश्लोक एवं भवति –

**उद्योगः करिकीटमेघशकलोद्देशेन सिंहस्य यः**<br>
**सर्वस्यैव स जातिमात्रनियतो हेवाकलेशः किल ।**<br>
**इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽपि नोद्युक्तवान्**<br>
**योऽसौ कुत्र चमत्कृतेरतिशयं गौर्या हरिर्यातु सः ॥**

विधेयाविमर्शे शब्दशास्त्रीयं बीजम् – 'दास्याः पुत्रः' इत्यादावाक्रोशे षष्ठ्या अलुकं प्रतिपादयता सूत्रकृता विधेयाविमर्षः सूचित एव । सूत्रम् – षष्ठ्या आक्रोशे (६.३.२१)

पुत्रेऽन्यतरस्याम् (६.३.२२) वृत्तिः – षष्ठयाः पुत्रे परेऽलुग्वा निन्दायाम् । दास्याः पुत्रः, दासीपुत्रः । निन्दायां किम् – ब्राह्मणीपुत्रः ।

**व्याख्या** – 'दास्याः पुत्रः' इत्यत्र षष्ठया अलुकं कृत्वा भगवान् पाणिनिः सूचयति यत् षष्ठीश्रवणे सत्येव विवक्षितनिन्दारूपार्थस्य प्रतीतिः सम्भवति । अनेनान्यत्रापि ध्वनितं यद् विभक्तिश्रवणे सत्येव विवक्षितार्थ–बोधो भवति । अतोऽत्र विशेषणवाचिना शब्देन उत्कर्षापकर्षरूपोऽर्थो विवक्षितः तत्र समासो न कार्यः । समासे सति विभक्तिलुकि विवक्षितापकर्षादिरूपोऽर्थः न प्रतीयेत ।

**प्रक्रमभेदः** – प्रक्रमः प्रस्तावः (उपक्रमः) तस्य भेदः प्रक्रमभेदः ।

येन रूपेणोपक्रमस्तेनैवोपसंहार इति नियमस्य भेदः (भङ्गः) इति प्रक्रमभेदः ।

कस्यचिद्वस्तुनो निर्वाहायारम्भस्तस्य भेदो मध्येऽन्यथाकरणम् अन्यथानिर्वाहश्च ।

एतस्य बहवः भेदाः सन्ति – प्रकृतिप्रक्रमभेदः, सर्वनामप्रक्रमभेदः, प्रत्ययप्रक्रमभेदः, उपसर्गप्रक्रमभेदः, कारकप्रक्रमभेदः ।

**प्रकृतिप्रक्रमभेदः** – **सततमनभिभाषणं मया ते परिपणितं भवतीमनानयन्त्या ।**<br>
**त्वयि तदिति विरोधनिश्चितायां भवति भवत्वसुहृज्जनः सकामः ॥**

**गतधृतिरवलम्बितुं बतासूननलमनालपनादहं भवत्याः**

**प्रणयिनि यदि न प्रसादबुद्धिर्भव मम मानिनि जीविते दयालुः ॥**

अत्र भाषतिलपत्योरुभयोरपि वचनार्थः समानो वर्तते । प्रारम्भः भाष्धातोर्वर्तते, उपसंहारः लप्धातोर्वर्तते अतः अत्र प्रकृतिप्रक्रमभेदोऽस्ति ।

**सर्वनामप्रक्रमभेदः - ते हिमालयमामन्त्र्य पुनः प्राप्य च शूलिनम् ।**

**सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ।**

इह श्लोके "अस्मै" इति इदं शब्देन कृतोपक्रमस्य पदार्थस्य इदं शब्देनैव, तत्सदृशाभ्यां वा परामर्शः सम्बन्ध उचितो न तच्छब्देन, अतः सर्वनामप्रक्रमभेददोष इति ।

**प्रत्ययप्रक्रमभेदः - यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।**

**निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ।**

इह तुमुन्प्रत्ययेन प्रक्रमे 'लिप्सायाम्' इति सन्प्रत्ययस्योपादानात् प्रत्ययभेदेन प्रत्ययप्रक्रमभेदो वर्तते ।

अत्र सुखलिप्सया इति स्थाने सुखम् ईहितुं इति उचितम् । तथा चैतादृशे पाठे एकविधतुमुन्प्रत्ययेन प्रक्रियायाः प्राधान्यावगमान्न प्रत्ययप्रक्रमभेदः ।

**उपसर्गप्रक्रमभेदः - विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।**

**नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥**

इह विपद इत्यत्र व्युपसर्गमुपक्रम्य आपदुपेतमित्यत्र आङ् उपादानादुपसर्गस्य उपसर्गप्रक्रमभेदः । तथा लघुतेत्युपक्रम्य अगरीयानिति पर्यायान्तरोपादानात्पर्यायस्य प्रक्रमभेदश्च । तेन एवं निर्दोषः सम्पूर्णश्लोक एवं भवति ।

**विपदोऽभिभवन्त्यविक्रमं तदभिभवः कुरुते निरायतिम् ।**

**लघुतां भजते निरायतिर्लघुतावान्न पदं नृपश्रियः॥**

**कारकप्रक्रमभेदः - गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं**

**छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्ताम् ।**

**विश्रब्धं क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले**

**विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः ॥**

अत्र 'गाहन्ताम्' कर्तृकारकवाचकतिङः प्रक्रमे 'क्रियताम्' इति कर्मकारकवाचकस्योपादानात्कारकप्रक्रम-भेदः । अत्र 'विस्रब्धः कुरुतां वराहनिवहो मुस्ताक्षतिः पल्वले' इति पठितुं युक्तम्, एवं च नात्मनेपदप्रक्रमभेदोऽपि ।

अत्र शब्दशास्त्रीयं बीजं स्वामीष्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च (२.३.३९) इत्यत्र सूत्रे न हि भवति गवां स्वामी अश्वेषु चेति वदता भाष्यकृता स्पष्टमेव प्रक्रमभेदः प्रतिपादितः ।

सूत्रम् - स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च (२.३.३९)

इति सूत्रेण स्वाम्यादियोगे षष्ठ्याः सप्तम्याश्च प्रयोगः शिष्टः । तत्र भाष्यकारस्य अभिप्रायो यद् यदि षष्ठ्या प्रारम्भः तदा षष्ठ्या एव उपसंहारः कर्तव्यः । अतः "अयं देवदतः गवाम् अष्वानां च स्वामी" इति वक्तव्यम् । न तु गवामित्यत्र षष्ठी, अश्वेषु इत्यत्र सप्तमी वाच्या । एवं यदा सप्तम्याः प्रारम्भः तदा सप्तम्या एव उपसंहारः कर्तव्यः । यथा - अयं देवदत्तः गोषु अष्वेषु च स्वामी इति । न तु गोषु अष्वानां चेति वाच्यम् । अनेन स्पष्टमेव यद् भाष्यकारः यथाप्रक्रमम् उपसंहारं शास्ति । यथोपक्रमोपसंहाराभावे प्रक्रमभेद एवं स्पष्टमेव ध्वनितः ।

**क्रमभेदः** - क्रमस्य परिपाट्या भेद उल्लंघनं व्युत्क्रमः । अर्थात् यत्पदानन्तरं यत्पदोपादानमुचितं ततोऽन्यत्र तदुपादानम् । यथा - **द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।**

**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥**

अत्र हि लोकस्य चेति चकारस्त्वंपदानन्तरं युक्तः, त्वं पदार्थस्यैव शोच्यतायां समुच्चयस्य व्यञ्जनीय-त्वाद् लोकपदार्थे समुच्चयाभावादिति ।

चादीनां व्यवहितेन सम्बन्धो नेष्ट इत्युक्तं महिमभट्टेन

**अत एव व्यवहितैर्बुधा नेच्छन्ति चादिभिः ।**

**सम्बन्धं ते हि शक्तिं स्वामुपदध्युरनन्तरे ॥**

अत्र 'जगद्दूषस्त्वञ्च विशुद्धचन्द्रिका' इति पाठक्रमो युक्तः ।

अत्र शब्दशास्त्रीयं बीजं 'कृञ्चानुप्रयुज्यते लिटि' इत्यत्रानुप्रयोगस्यानुशब्दपर्यालोचनया व्यवहितपूर्वप्रयोगं 'तं पातयां प्रथमममास' इत्यादौ निषेधता क्रमभेदः प्रतिपादितः ।

**सूत्रम्** - कृञ्चानुप्रयुज्यते लिटि (३.१.४०)

**वृत्तिः** - आमन्तात् लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते ।

**व्याख्या** - आमः ५-१ (कास्प्रत्ययादाममन्त्रे लिटि ३.१.३५) कृञ् १-१, च इत्यव्ययपदम् । अनुप्रशब्दौ प्रत्येकं प्रथमान्ते पदे । युज्यते इत्यात्मनेपदे प्रथमपुरुषैकवचनान्तं पदम् । कृभ्वस्तियोगे संपद्यकर्तरि च्विः (५.४.५०) इति कृशब्दादारभ्य कृञो द्वितीयतृतीयशम्बबीजात् कृषौ (५.४.५८) इति ञकारेण 'कृञ्' इति प्रत्याहारः।

अनुशब्दस्य अर्थः पश्चात् इति विपर्यासनिवृत्त्यर्थम् । यथा - चक्रे ईहामिति मा भूत् । प्रशब्दस्य अर्थः प्रकर्ष इति व्यवहितनिवृत्त्यर्थम् । यथा - ईहां देवदत्तश्चक्रे इति मा भूत् ।

एतेन ज्ञायते यद् व्यवहितपूर्वप्रयोगो न भवति ।

अतः ''तं पातयां प्रथममास पपात पश्चात्'' इति व्यवहितप्रयोग आर्षप्रयोगानुसारेण ।

अनेन निर्धारितस्थानाद् अतिरिक्तस्थाने प्रयोगे स्थानप्रयोगरूपः क्रमभेदः सूचितः ।

**पौनरुक्त्यम्** - पौनरुक्त्यं पुनः प्रतिपादनम् । यथा -

**अश्वीयसंहतिभिरुद्धतमुद्धराभिर्भूरेणुजालमखिलं वियदाततान ॥**

अत्र 'केशाश्वाभ्यां यञ्छौ' (४.२.४८) इति सूत्रेण समूहार्थे छप्रत्यये कृते निष्पन्नेन अश्वीयशब्देन अश्वसमूहरूपार्थे उक्तेऽपि समूहार्थः संहतिशब्दः पुनरुपात्त इति समूहार्थस्य पौनरुक्त्यम् अनौचित्यं वर्तते ।

इह शब्दशास्त्रीयं बीजम्-कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात् स्यादिति वृत्तिलाघवं चिन्तयता कात्यायनेन पौनरुक्त्यमपि प्रकाशितमेव ।

अनेन वार्त्तिकेन ध्वन्यते यद् योऽर्थः शब्दान्तरेण बोधितः, तस्य पुनरन्येन शब्देन बोधनं गौरवापत्त्या न कार्यम् । अनेन शब्दान्तरेण बोधितेऽर्थे पुनः शब्दान्तरप्रयोगे सति पौनरुक्त्यम् अनौचित्यम् उच्यते ।

पीताम्बरसम्बन्धिरूपेऽर्थे पीताम्बर इति बहुव्रीहिणा बोधिते सति कर्मधारयाश्रयेण मत्त्वर्थस्य प्रयोगो न समीचीन इति वार्त्तिकतात्पर्यम् ।

**वाच्यावचनम्** - वाच्यस्य वक्तव्यस्य अवचनमनुक्तिः । यथा -

**नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः**
**सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।**
**अयमपि पटुर्धारासारो न बाणपरम्परा**
**कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥**

अत्र नवजलधरः, सुरधनुः, धारासारश्चेति त्रयः पदार्थाः इदमा परामृष्टाः। एवं विद्युतोऽपि इदमा परामर्शो वक्तव्यः आसीत् । किन्तु वाच्यस्य इदमा परामर्शस्य वचनं न कृतमिति वाच्यावचनरूपम् अनौचित्यम् ।

अत्र शब्दशास्त्रीयं बीजम्-ईषदसमाप्तौ कल्पब्देश्यदेशीयरः (५.३.६७) इति सूत्रे गुडकल्पा द्राक्षा इत्यादि भाष्यकृता उदाहृतम् । अत्र भाष्ये रूपकोपमयोः संशयं विधाय उपमा सिद्धान्तिता । ''गुडो द्राक्षा'' इति विग्रहे गुडशब्दस्य गुडपदार्थमात्रवाचित्वे सति गुडस्याभेदारोपे गुडरूपार्थे यदि कल्पप् प्रत्ययः तदा रूपकार्थः । यदा तु गुडपदस्य स्वार्थसदृशे लक्षणा तदर्थे च कल्पप् तदा उपमार्थः सिद्ध्यति । किन्तु ईषदसमाप्तिवचनेन प्रकृत्यर्थस्य स्वार्थसदृशे लक्षणास्वीकारेण उपमार्थ एव व्यवस्थितो भवति । एवं कल्पबादिस्थले उपमां व्यवस्थापयता भाष्यकृता वाच्यावचनम् अनौचित्यं सूचितम् ।

**अवाच्यवचनम्** - अवक्तव्यस्य वचनमुक्तिः । यथा -

**सरित्समुद्रान्सरसीश्च गत्वा रक्षः कपीन्द्रैरुपपादितानि ।**

**तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः ॥**

अत्र सलिलरूप एक एवार्थ उपमेयत्वेन उपमानत्वेन चोक्तः । एकस्मिन् एव पदार्थे अवाच्यस्य उपमानोपमेयभावस्य वचनाद् अवाच्यवचनम् अनौचित्यम् । अत्र तु पर्यायमात्रेण भेद उक्तः । विन्ध्यस्य मेघप्रभवानि यद्वत् इति पाठः समीचीनः ।

तथा सति हि उपमादोषोऽपि परिहृतो भवति ।

अत्र शब्दशास्त्रीयं बीजं-कल्पबादिस्थले रूपकं निषेधता भाष्यकृता अवाच्यवचनमपि सूचितम् । यत्र कविना कल्पबादिना अवाच्यस्य रूपकस्य वचनं क्रियते तत्र अवाच्यवचनं भवति । एवमन्यत्रापि ध्वनित एव यद् येन शब्देन यन्न वक्तव्यं तस्य वचनम् अवाच्यवचनम् अनौचित्यम् ।

**सहायकाचार्यः, व्याकरणविभागः**
**जगद्गुरुरामानन्दाचार्यराजस्थानसंस्कृतविश्वविद्यालयः**
**जयपुरम् (राजस्थानम्) ।**



# व्याकरणशास्त्रीयपारिभाषिकशब्दानां स्वरूपविमर्शः

✍श्री. इन्द्रकुमारमीना

**(शास्त्रपरम्परा लोकव्यवहारं प्रायशो नातिशेते । जना भवन्ति लाघवप्रियाः । तथैव शास्त्रकृतोऽपि लाघव-गौरवविचारपुरस्सरमेव स्वस्वसिद्धान्तानुपस्यन्ति । पारिभाषिकशब्दप्रयोगेण शब्दानां लाघवम्, अर्थानाञ्च गौरवं लभ्यते । साकमेव तत्तच्छास्त्रस्य स्वकीयं वैलक्षण्यमपि पुरस्क्रियते । प्रकृतनिबन्धे परिभाषा-स्वरूपमुद्घाट्य व्याकरणशास्त्रीयपारिभाषिकशब्दानां कतिपयविधया वर्गीकरणं विहितमस्ति ।)**

पारिभाषिकशब्दानां व्याकरणेन सह विशेषः सम्बन्धोऽस्ति । पारिभाषिकशब्दः ग्रन्थस्य प्रदर्शकः भवति । संस्कृतव्याकरणे तु शब्दः प्राणभूतोऽस्ति । अस्माकं गौरवपूर्णम् अतीतम् अस्यां भाषायां निबद्धमस्ति । व्याकरणेनैव भाषासमाजः सुसंस्कृतः परिमार्जितश्च भवति । व्याकरणशास्त्रीयग्रन्थेषु सन्देहो न जायेत तदर्थं शब्दानां स्पष्टार्थस्य अवधारणा शब्दस्य एकरूपता च महत्त्वमेति । पारिभाषिकशब्दमाध्यमेन व्याकरणशास्त्रे सरलतया प्रवेशः जायते । व्याकरणस्य पारिभाषिकशब्देषु अधिकांशतः संज्ञाशब्द एव पूर्णरूपेण पारिभाषिकः शब्दः भवति । पारिभाषिकसं-ज्ञाभिः शब्दैश्च सूत्रेषु संक्षिप्तता आयाति । भाष्यकारेण पतञ्जलिनापि कथितम् – 'अथवा महतीयं संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् ! लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्।' पाणिनिनापि अष्टाध्याय्यां सूत्रद्वारा स्पष्टार्थप्रतिपादनाय पारिभाषिकसंज्ञानां पारिभाषिकशब्दानाञ्च उपयागः कृतः वर्त्तते । यत्र यत्र तदर्थप्रतिपादनाय अधिकानां शब्दानाम् आवश्यकता भवति तत्र तत्र पारि-भाषिकशब्दप्रयोगेणैव अस्माकम् आचार्यैः विशिष्टं कार्यं कृतमस्ति। पारिभाषिकशब्दः अन्धकारयुक्ते प्रकोष्ठे दीपक इव भवति । यथा दीपकः लोकं प्रकाशयति तथैव पारिभाषिकशब्दा अपि व्याकरणशास्त्रं प्रकाशयन्ति ।

पारिभाषिकं नाम परिभाषायाम् आगतम् । परिभाषाशब्दात् ठञ्प्रत्ययेन निष्पन्नं भवति अयं शब्दः । परिभा-षार्थबोधकं पदम् । यथा तत्राधुनिकसङ्केतः परिभाषा तया अर्थबोधकं पदं पारिभाषिकम् । यथा शास्त्रकारादिसङ्-केतितनदीवृद्ध्यादिपदम् इति शक्तिवादे गदाधरः।[1] शब्दकल्पद्रुमे[2] परिभाषाशब्दस्य व्युत्पत्तिः एवं प्रतीयते-परिभाषा परि भाष् अच् ततष्टाप् । परिष्कृतं भाषणम् । ग्रन्थस्य संक्षेपनिर्वाहार्थं परिभाषा इति सङ्केतविशेषः इति मुक्तबोधटीकायां दुर्गादासः।[3] माघे तावत् – **न खलु प्रतिहन्यते कुतश्चित् परिभाषेव गरीयसो यदाज्ञा ।**

**अव्यक्तानुक्तलेशोक्तासन्दिग्धार्थप्रकाशिका ॥**

परिभाषाः प्रवक्ष्यन्ते दीपीभूताः सुनिश्चिताः ॥ इति ।[4] वाचस्पत्येऽपि परिभाषाशब्दस्य व्युत्पत्तिरेवं प्रति-पाद्यते यथा-परि भाष् अ । शास्त्रकृतां, कृत्रिमसंज्ञायाम् । अवयवार्थमनादृत्य समुदायार्थे विशिष्टसंज्ञायाम् । संज्ञा-परिभाषयोस्तु अवान्तरभेदः । परिभाषेन्दुशेखरे – यथोद्देशं संज्ञापरिभाषाम् । कार्यकालं संज्ञापरिभाषम् । अनयोः व्याख्याने द्रष्टव्यः कश्चिदेकदेशस्थः सर्वशास्त्रमभिज्वलयति यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयतीति

षष्ठी स्थाने इति सूत्रे भाष्योक्तम्। अधिकारशब्देन पारार्थ्यात् परिभाषाप्युच्यते । कश्चित् परिभाषारूपा इति कैयटः। दीपो प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत् । स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत् तात्पर्यम् । आधुनिक-सङ्केते पारिभाषिकशब्दे द्रष्टव्यम् ।[5] परिभाषा व्याकरणनियमानां निर्दुष्टं स्वरूपं प्रस्तौति । अत एव 'अनियमे नियमकारिणी परिभाषा' इत्युच्यते । परिभाषाशब्दप्रयोगो अष्टाध्याय्यां न प्राप्यते । वार्त्तिककृतस्तु प्रयोगोऽस्य अणु-दित्सवर्णस्य चाप्रत्ययः इति सूत्रस्य वार्त्तिके कृतः । अथ च 'स्वरितेनाधिकारः' इति सूत्रस्य तृतीये वार्त्तिके 'अन्यनिर्देशस्तु निवर्तकस्तस्मात् परिभाषा' इत्युल्लेखो वर्तते ।[6]

पाणिनिस्तु स्वकीयाष्टाध्याय्यां सूत्राणि निर्मातुं परिभाषासूत्राणां निर्माणमकार्षीत् । एतावता सूत्राणां संख्या पञ्चाशत्प्राय आस्ते । व्यावहारिके क्षेत्रे व्याकरणेतरशास्त्रे च परिभाषाशब्दः स्वरूपपरिचायकत्वेन प्रयुज्यते । नानाचार्यैः वस्तूनां स्वरूपमवगमयितुं यः शब्दः प्रयुज्यते यथा – अमुकं वस्तु इत्थं वर्तते, तदेव परिभाषा भवति । काव्यशास्त्रटीकाकृता चण्डीदासेनोक्तम् – पदार्थविवेकाचार्याणां युक्तियुक्ता वाक् परिभाषा ।[7] यत्र पदार्थो अवय-वार्थाः न घटन्ते, अपि तु समुदायार्थे एव विशिष्टा शक्तिरवतिष्ठते यथा शास्त्रकृता कृत्रिमसंज्ञायां तदपि परिभाषा-त्वेन प्रोच्यते । शास्त्राणां सिद्धान्तज्ञापनाय तत्तच्छास्त्रसम्बन्धिविशिष्टार्थावलम्बिपदानां समुदायः पारिभाषिकशब्दत्वेन सूच्यते। अन्येषु शास्त्रेषु यादृक् पारिभाषिकशब्दसमुदायः वर्तते तद्वत् व्याकरणशास्त्रेऽपि तादृक् शब्दसमुदायः विशिष्टं अर्थं संवहन् अस्ति । यथार्थार्थज्ञप्तये सहायकाश्च एते पारिभाषिकशब्दाः । व्याकरणमण्डले विद्यमानः यः अर्थः सः व्याकरणसिद्धान्तानुगुणः न तत्त्वितरसिद्धान्तयोग्यः भवितुमर्हतीति नियमः न कश्चिदस्ति । एतादृशाः पारिभाषिकशब्दाः एव व्याकरणशास्त्रे व्याकरणसंज्ञा इत्यभिधीयन्ते । तस्माद्व्याकरणशास्त्रे संज्ञा इति पदेन द्योत्यं यत् तत् पारिभाषिकशब्दाभिधेयम् । सर्वेषां शास्त्राणां स्वकीयसंज्ञाव्यवस्था अस्ति । व्याकरणस्यापि स्वस्य संज्ञाव्यवस्था। बहवः साङ्केतिकसंज्ञाः लौकिकव्यवहारभाषायां द्रष्टुं शक्यन्ते । एताः व्याकरणसंज्ञाः पाणिनिना बहवः व्यवहृताः । प्रकृतिप्रत्ययघटितरूपं शब्दः, किन्तु साङ्केतिकसंज्ञायाः एतादृशघटकाः न सन्त्येव । विधिशास्त्रीयवाक्यार्थबोधोप-कारकत्वं संज्ञापरिभाषयोः परमं प्रयोजनम् ।[8]

**पारिभाषिकशब्दानां वर्गीकरणम्** – पाणिनिना पारिभाषिकशब्दानां विशिष्टवर्गीकरणं न कृतम् । पारि-भाषिकशब्दाः द्व्यर्थकाः । विभिन्नप्रयोजनार्थमेव वैयाकरणैः एतादृशकृत्रिमनामानि दत्तानि । व्याकरणशास्त्रे एव ता-दृशप्रयोजनम् । कृत्रिमसंज्ञानां प्रयोजनं न केवलं व्याकरणे एव । अपि तु लौकिकव्यवहारे । यथा – वृद्धिरादैच, अदेङ्गुणः इति वृद्धिगुणसंज्ञाविधायके सूत्रे । किन्तु लौकिकव्यवहारे वृद्धिः गुणश्च स्वकीयार्थेष्वेव प्रयुज्यते । द्वयोर्मध्ये तुल्यबलविरोधे वृद्धिरेव कार्यं स्यात् । पुनः पारिभाषिकशब्दाः द्विधा विभक्ताः। सैद्धान्तिकाः मौलिकाश्च।[9] सैद्धान्तिकशब्दाः स्वतन्त्रार्थभिन्नाः, व्याकरणशास्त्रे निरुक्ताश्च । प्रक्रियादशायामेव तेषां विशेषार्थलब्धिः । मौलिक-

शब्दाः व्याकरणशास्त्रे निरूपिताः । अपि च तेषां लौकिकव्यवहारे अपि स्वकीयार्थाः । पारिभाषिकशब्दानां प्र-कारानुसारं भिन्नानाम् आचार्याणां मते पारिभाषिकपदानि भिन्नप्रकारैः विभज्यन्ते ।

1. स्वव्याख्यानपदानि । यथा - लोपः, ह्रस्वः, दीर्घः, सर्वनाम इत्यादीनि ।
2. शास्त्रप्रसिद्धानि किन्तु प्रक्रियादशायां भिन्नार्थकानि । यथा - नदी ,गुणः , वृद्धिः इत्यादीनि ।
3. कृत्रिमपदानि । एषां व्याकरणशास्त्रभिन्ने कार्य अर्थो नास्ति । यथा - टि, घु, भ इत्यादीनि ।

पारिभाषिकशब्दाः शब्दसंज्ञा, अर्थसंज्ञा, धर्मसंज्ञा इत्यादिरूपेणापि विभक्ताः कर्तुं शक्यन्ते ।

**शब्दसंज्ञा** - शब्दसंज्ञायां वृद्धिः, गुणः, संयोगः, अनुनासिकः, सवर्णम्, प्रगृह्यम्, टि, घु, घ, संख्या, षट्, निष्ठा, सर्वनाम, अव्ययम्, सर्वनामस्थानम्, उपधा, वृद्धः, ह्रस्वः, दीर्घः, प्लुतः, अपृक्तम्, कर्मधारयः, उपसर्जनम्, प्रातिपदिकम्, धातु, इत्, नदी, घि, लघु, गुरुः, अङ्गम्, पदम्, भ, एकवचनम्, द्विवचनम्, बहुवचनम्, निपातः, उपसर्गः, गतिः, कर्मप्रवचनीयः, परस्मैपदम्, आत्मनेपदम्, प्रथमपुरुषः, मध्यमपुरुषः, उत्तमपुरुषः, विभक्तिः, अवसानम्, समासः, अव्ययीभावः, तत्पुरुषः, द्विगुः, बहुव्रीहिः, द्वन्द्वः, आमन्त्रितम्, सम्बुद्धिः, प्रत्ययः, उपपदम्, कृत्, सत्, कृत्यः, सार्वधातुकम्, आर्धधातुकम्, तद्धितः, गोत्रम्, युवा, तद्राजः, अभ्यासः, अभ्यस्तम्, आम्रेडितम् इत्यादीनि पदानि सन्ति ।

**अर्थसंज्ञा** - अर्थसंज्ञायाम् विभाषा, लोपः, लुक्, श्लु, लुप्, सम्प्रसारणम्, कर्तृ, कर्म, करणम्, सम्प्रदानम्, अपादानम्, अधिकरणम्, संहिता इत्यादीनि पदानि सन्ति ।

**धर्मसंज्ञा** - धर्मसंज्ञायां उदात्त - अनुदात्त - स्वरीतादीनि ।[10]

पारिभाषिकशब्दः समस्तव्याकरणशास्त्रस्य आधारस्तम्भः विद्यते । पाणिनेः पूर्ववर्तिनः उत्तरवर्तिनश्चानेके वैयाकरणाः स्व-स्वग्रन्थेषु शास्त्रप्रक्रियायाः सरलीकरणाय विभिन्नपारिभाषिकशब्दानां प्रयोगम् अकुर्वन् । पाणिनेः काले व्याकरणसम्प्रदायः पूर्णतां प्राप्त इत्यनुमातुं शक्यते । उदात्तः, अनुदात्तः, स्वरितः, संहिता, ह्रस्वः, दीर्घः, प्लुतः इत्यादिपदानि पाणिनेः पूर्ववर्तीनि । उच्चारणशास्त्रे व्याकरणे च परिज्ञानं येषां नास्ति तान् उद्दिश्य एव उदात्त - अनुदात्तप्रभृतिपदानि पाणिनीयसूत्रद्वारा निर्दिष्टानि इति महाभाष्यकारः निर्वक्ति ।[11] पाणिनेः पूर्ववर्तिना यास्केन उपसर्गः, धातुः, लोपः, सवनाम इत्यादीनि परामृष्टानि । सम्प्रत्ययानां कार्येषु पाणिनिः कृतनिश्चयः आसीत् । पतञ्जलेः आरभ्य नागेशपर्यन्तं वर्तमानैः वैयाकरणैः पाणिनिपूर्वेभ्यः वैयाकरणेभ्यः पारिभाषिकशब्दाः स्वीकृताः । वृद्धिः, गुणः इत्यादीनुद्दिश्य अपिशलिः अवदच्च ।[12] अपिशलेः पदप्रयोगः वृद्धिरूपेण एव । किन्तु पाणिनेः प्रयोगः आदेशरूपेणैव । भगवान् पाणिनिः तादृशानां पारिभाषिकशब्दानां प्रयोगं कृतवान् ये पूर्ववर्त्तिव्याकरणग्रन्थेषु दृष्टि-गोचरतां याति । पाणिनेः पारिभाषिकशब्दानां सूची क्रमशः अकथितम्, अङ्गम्, अधिकरणम्, अनुदात्तः, अनुनासिकम्, अनुस्वारः, अपादानम्, अपृक्तम्, अभ्यस्तम्, अभ्यासः, अवसानम्, अव्ययम्, अव्ययीभावः,

आत्मनेपदम्, आदेशः, आर्धधातुकम्, आम्रेडितम्, आमन्त्रितम्, इत्, उत्तमः, उदात्तम्, उपपदम्, उपधा, उपसर्जनम्, उपसर्गः, एकवचनम्, कर्ता, कर्मधारयः, कर्म, कर्मप्रवचनीयः, करणम्, कारकम्, गतिः, गुणः, गुरु, गोत्रम्, घ, घु, घि, तत्पुरुषः, तद्धितः, तद्राजः, दीर्घः, द्वन्द्वः, द्विगुः, द्विवचनम्, धातुः, नदी, निपातः, निष्ठा, टि, पदपरस्मैपदम्, प्रत्ययप्रत्यहारः, प्रगृह्यम्, प्रातिपदिकम्, प्रथमः प्लुतः, बहुवचनम्, बहुवीहिः, भ, मध्यमः, लघु, लुप्, लुक्, लोपः, युवा, वर्गः, विभक्तिः, विभाषा, विसर्जनीयः वृद्धः, वृद्धिः, श्लु, षट्, संख्या, सत्, समासः, सम्प्रदानम्, सम्प्रसारण, सर्वनाम, सर्वनामस्थानम्, सवर्णम्, संयोगः, संहिता, सार्वधातकम्, स्वरितः, हेतुः । अनेन प्रकारेण पाणिनेः अष्टाधाय्यां प्रयुक्ताः इमे सर्वे पारिभाषिकशब्दाः स्वल्पशब्दैः अनेकार्थं प्रतिपादयन्ति । तथा सूत्रेषु भावाभिव्यक्तिसौन्दर्यात्मकार्थः लाघवे एव विद्यमानः भवति । अयं विशिष्टः गुणः पारिभाषिकसंज्ञायां विद्यमानः भवति । अतः वक्तुं शक्यते यत् पारिभाषिकशब्दः पारिभाषिकसंज्ञा च भावाभिव्यक्तेः प्राणाः भवन्ति । अतः पारिभाषिकशब्दानां प्रयोगेण शास्त्रं लघुकायं भवति तथा एतेषां शब्दानां सम्यक् ज्ञानेन शास्त्रावबोधः सुगमतया जायते ।

**सन्दर्भाः**

1. शब्दकल्पद्रुमः3, 126 ।
2. पाणिनि सूत्र 3.62 ।
3. मुक्तबोधटीका, पृष्ठ 28-29 ।
4. अद्वैतवेदान्ते पारिभाषिकशब्दविमर्शः, डा. दिलीपकुमारः, आमुखम्, पृष्ठ 12-51 ।
5. अद्वैतवेदान्ते पारिभाषिकशब्दविमर्शः, डा. दिलीपकुमारः, आमुखम्, पृष्ठ 12 ।
6. परिभाषान्दुशेखरस्य विजयाभूतिव्याख्यायोस्तुलनात्मकमध्ययनम्, डा. प. बोधकुमार झा, पृष्ठ 1.52 ।
7. परिभाषान्दुशेखरस्य विजयाभूतिव्याख्यायोस्तुलनात्मकमध्ययनम्, डा. प. बोधकुमार झा, पृष्ठ 2.53 ।
8. परिभाषान्दुशेखरः, पृष्ठ 11 ।
9. एच्. बी. द्विवेदी, पृष्ठ 19.54 ।
10. एच्. बी. द्विवेदी, पृष्ठ 30-32 ।
11. महाभाष्यम् 1.2.32 ।
12. पाणिनि सूत्र 6.2.36/एच्. बी. द्विवेदी, पृष्ठ 19 ।

**सहायकाचायः, व्याकरणविभागः**
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
**क.जे. सोमैया परिसरः, मुम्बई ।**



# Applying Semantics Theory to Vocabulary Teaching

✍Dr. Shweta Sood

**[The study of semantics is a truly psycholinguistic matter. It is concerned with linguistic entities and therefore it has to take account of the linguistic features of vocabulary. Given the increasing dimensions of learning and teaching resources available in online repositories; and the growing number of learners choosing Web-based environments for studying, the opportunities offered by semantic technologies are increasingly significant in the world of education.Dr. ShwetaSood here in this paper aims to highlight the enormous opportunities for semantics technology in education.]**

**Abstract-** Semantics in language determines the relationship between signifiers and what they signify. Although images and body language can be included as signifiers in a wider study of semantics, linguistic semantics deals strictly with words and their meanings. Semantics is a subfield of linguistics specializing in the study of meaning. For students of semantics in language, signifiers have multiple levels of meaning.Given the increasing volume of learning and teaching resources available in online repositories, the growing number of learners choosing Web-based environments for studying, and the need to link heterogeneous data to implement the spreading vision of lifelong learning, the possibilities offered by semantic technologies are increasingly relevant in the world of education.

**Keywords:** Semantics, Language, Signifiers, Linguistics, Meaning, Online, Web, Heterogeneous, Technology, Education.

**Applying Semantics Theory to Vocabulary Teaching -** The study of meaning and its manifestation in language is normally referred to as semantics from the Greek noun sema 'sign', signal; and the semains 'signal, mean, signify', The Shorter Oxford Dictionary glosses the term semantics as 'relating to signification or meaning'. Broadly speaking, semantics is that aspect of linguistics which deals with the relations between referents (names) and referends (things) – that is linguistic levels (words, expressions, phrases) and the objects or concepts or ideas to which they refer – and with the history and changes in the meaning of words. Diachronic (historical) semantics studies semantic change, whereas synchronic semantics accounts for semantic relationship, simple or multiple. A semanticist would like to find how a man is able to paraphrase, transform and detect ambiguities and why the surrounding words sometimes force him to choose one interpretation rather than other. A semantic analysis, for example, of English, must also explain antonyms, synonyms, homonyms, polysemy, anomalies, contradictions, paraphrase, relations, ambiguities, implications and transformations of the language.

According to Manfred Bierwish, a semantic theory must:

(a) Make reference to the syntactic structure in a precise way;
(b) Systematically represent the meaning of single words;
(c) Show how the structure of the meaning of words and the syntactic relations interact, in order to constitute the interpretation of sentences; and
(d) Indicate how these interpretations are related to the things spoken about.

Although the structuralists tried to study language without meaning, the importance of meaning has been recognized since time immemorial. In the Vedas, meaning is treated as the essence of language, and the speech without meaning has been called 'the tree without fruits and flowers' (Rigveda 9/71/5). Cf. (Yaska, Nirukta 1/20).Ancient Indian scholars such as Katyayana, Patanjali, Vyadi, Vyas, etc. regard the relationship of word and meaning as eternal. According to Patanjali, words naturally express meaning. Were the words eternal, one word would have meant one and the same thing in all the languages; there would have been no semantic change, and men would not have felt any necessity of learning words. Nonetheless, some scholars too have started talking about semantic universals now-a-days, and today, there is a wide agreement than if ever was that meaning is the soul of language.

Semantics in language determines the relationship between signifiers and what they signify. Although images and body language can be included as signifiers in a wider study of semantics, linguistic semantics deals strictly with words and their meanings. Semantics is a subfield of linguistics specializing in the study of meaning.For students of semantics in language, signifiers have multiple levels of meaning. The simplest level, also known as the first order of signification, is the denotation of a word. Denotation refers to a strictly literal understanding, and the object referred to is known as the denotata. For example, the noun phrase "brown bear" signifies a large omnivorous mammal known scientifically as the ursus arctos.Various cultural or emotional meanings attached to a word provide one or more deeper levels of meaning. These subjective meanings are known as connotations. For example, a camper might hear "brown bear" with a connotation of fear and panic. On the other hand, "brown bear" might mean friendship, comfort, and security for a child who plays and sleeps with a stuffed animal.

The field of formal semantics, or model theoretic semantics, was pioneered by philosopher and mathematician Richard Montague in the mid twentieth century. Montague showed how all sentences could be broken down into subjects and predicates. These parts could be compared to mathematical concepts, particularly those in the branch of mathematics called typed lambda calculi, in order to evaluate its meaning. This theory is also known as Montague grammar.

Although Montague's theory of semantics in language is one of the first and most commonly accepted, various philosophers have created other systems. For example, the theory of truth-conditional semantics was developed by Donald Davidson shortly after Montague published his work on formal semantics. Truth-conditional semantics evaluates the truth of a sentence by looking to specific, real world examples. Other theories include conceptual, lexical, and computational semantics.Those who are not linguistic experts can still see the effect of semantics in language in the form of a semantic dispute. A semantic dispute is a disagreement over the meaning of a word. Spouses might argue over purchases but actually be arguing over the definition of cheap, expensive, or reasonable. Semantic disputes can range from ridiculous to nationally significant. Many court cases have been judged over the meaning of legal phrases, such as "cruel and unusual punishment" and "separate but equal."

**Application of Semantic Theory to Vocabulary Teaching** - It describes an approach to the teaching of English vocabulary which draws on several aspects of theoretical semantics.For example it makes an effort to identify the learner's goals and problems in acquiring vocabulary. In order to achieve the required objective we need to understand the comprehensive level of the students.

**Comprehension** - Comprehension is the ability to read text, process it and understand its meaning. An individual's ability to comprehend text is influenced by their traits and skills, one of which is the ability to make inferences. There are a number of approaches to improve reading comprehension, including improving one's vocabulary and reading strategies.

Comprehension is a "creative, multifaceted process" dependent upon four language skills: phonology, syntax, semantics, and pragmatics. Proficient reading depends on the ability to recognize words quickly and effortlessly. It is also determined by an individual's cognitive development, which is "the construction of thought processes". Some people learn through education or instruction and others through direct experiences.

Reading comprehension involves two levels of processing: shallow (low-level) processing and deep (high-level) processing. Deep processing involves semantic processing, which happens when we encode the meaning of a word and relate it to similar words. Shallow processing involves structural and phonemic recognition, the processing of sentence and word structure and their associated sounds.

One such strategy for improving reading comprehension is the technique called SQ3R: Survey, Question, Read, Recite, and Review that was introduced by Francis Pleasant Robinson in his 1946 book *Effective Study*.

**Vocabulary -** Reading comprehension and vocabulary are inextricably linked. The ability to decode or identify and pronounce words is self-evidently important, but knowing what the words mean has a major and direct effect on knowing what any specific passage means. Students with a smaller vocabulary than other students comprehend less of what they read and it has been suggested that the most impactful way to improve comprehension is to improve vocabulary.

Most words are learned gradually through a wide variety of environments: television, books, and conversations. Some words are more complex and difficult to learn, such as homonyms (words that have multiple meanings), and those with figurative meanings, like idioms, similes and metaphors. A short look at examples is given hereunder:

**Homonyms**

- Dog bark, tree bark
- Right, write.
- Left (verb), left (noun)
- Pen (a holding area for animals), pen (a writing instrument)
- Wound (injury), wound (wrap around)

| Idioms | Meaning |
| --- | --- |
| We'll cross that bridge when we come to it | Let's not talk about that problem right now |
| Wrap your head around something | Understand something complicated |
| You can say that again | That's true, I agree |
| Your guess is as good as mine | I have no idea |

**Similes**

- Our soldiers are as brave as lions.
- Her cheeks are red like a rose.
- He is as funny as a monkey.
- The water well was as dry as a bone.
- He is as cunning as a fox.

**Metaphors**

- The snow is a white blanket.
- He is a shining star.
- Her long hair was a flowing golden river.
- The children were flowers grown in concrete gardens.
- The falling snowflakes are dancers.
- The calm lake was a mirror.

**Morphemic Instruction** - The strategies for learning new words can be further subdivided into instruction on using context and instruction on using morphemes, or meaningful units within words to learn their meaning. Morphemic instruction has been shown to produce positive outcomes for students reading and vocabulary knowledge. For example, the teacher can adopt the useful strategy in his teaching in "learning" morphemic analysis - prefixes, suffixes and roots which suggests that it be imparted incidentally and in context.

**Opportunities for Semantic Processing in Education** - In recent years, semantics has also begun to play a central role in more technical fields — particularly in the Internet domain, and often in combination with the expression “Semantic Web.”In today’s technical era, semantics is the core technology required to enable the envisioned shift from a “Web of documents” to a “Web of data.” In such a revolutionary scenario, traditional Web pages would largely be replaced by heterogeneous information repositories that could be transparently accessed by both humans and machines.

This vision and efforts by organizations such as the World Wide Web Consortium (W3C) have profoundly transformed the role of Web end users over the past decade. Mere (data) consumers have started to actively take part in producing new knowledge, as witnessed by the growing spread of communication tools such as wikis, blogs, and social networks. Following a similar trend, machine-produced content is progressively being organized in a structured way that can be shared and linked to any related information.

Given the increasing volume of learning and teaching resources available in online repositories, the growing number of learners choosing Web-based environments for studying, and the need to link heterogeneous data to implement the spreading vision of lifelong learning, the possibilities offered by semantic technologies are increasingly relevant in the world of education.

In particular, we showcase how semantic technologies could:

- Support the creation, delivery, and revision of qualifications, courses, and related learning materials — for instance, comparing existing courses to remove overlaps or designing new courses by identifying deficiencies at other institutions or addressing needs from the labor world.
- Create computer-based tutoring systems that could assist students by recommending suitable subjects to fill their competency gaps — creating personalized paths and identifying the educators that could best support them.
- Simplify and improve access to learning objects within and across institutions by supporting the creation of wide interoperable knowledge repositories and using

context cues (about the particular field of study, type of learning activity, and so on) to effectively match content to queries by students and teachers.

- Foster collaborative learning and critical thinking approaches by making it easier to create environments that let users share experiences, and by simplifying the process of setting up groups based on students' backgrounds, preferences, and so on.

Thus, the opportunities for semantic technologies in education are enormous. They offer a mechanism to address technical, organizational, linguistic, and other constraints that can hinder the seamless sharing, processing, and adaptation of heterogeneous learning resources. It is worth noting a more general issue relating to the role of context and semantic knowledge in word-level reading. The English language contains numerous inconsistent or irregular words and its orthographic structure is therefore relatively opaque. Given that context and semantic knowledge are proposed to play a particularly important role in learning and reading inconsistent words, these variables may be of practical importance for the instruction of children learning to read in English, and of theoretical importance for models of reading in English.

**Works Cited**

1. *Barlow, M.,Cruse, D. A. and W. Croft. Cognitive linguistics. Cambridge: Cambridge University Press. 2010. Print.*
2. Fabrizio Lamberti, et al. "Semantics in Education," ***Computing Now***. Vol. 7, No. 4. Apr. 2014. Print.
3. Keenan, J. M. and Betjemann, R. S. "Comprehension of Single Words: The Role of Semantics in Word Identification and Reading Disability". In *Single-Word Reading: Behavioral and Biological Perspectives*. Ed.Grigorenko, E. and Naples, A.Mahwah. NJ: Erlbaum. 191-210. 2007. Print.
4. Kyte, C. S. and Johnson, C. J."The Role of Phonological Recoding in Orthographic Learning."*Journal of Experimental Child Psychology* 93: 166-185. 2006. Print.
5. Nagy, W., Herman, P. A. and Anderson, R. C."Learning Words from Context."*Reading Research Quarterly* 20: 233-253. 1985. Print.
6. Nation, K., Snowling, M. J. and Clarke, P."Dissecting the Relationship between Language Skills and Learning to Read: Semantic and Phonological Contributions to New Vocabulary Learning in Children with Poor Reading Comprehension."*Advances in Speech-Language Pathology*, 9: 131-139. 2007. Print.
7. Oakhill, J. "Instantiation in Skilled and Less Skilled Comprehenders." *Quarterly Journal of Experimental Psychology* 35A: 441-450. 1983. Print.

8. Ouellette, G. and Beers, A.“A Not-so-simple View of Reading: How Oral Vocabulary and Visual-word Recognition Complicate the Story.”*Reading and Writing* 23: 189-208. 2010. Print.
9. Ouellette, G. and Fraser, J. R.“The Role of Semantics in Orthographic Learning.”*Journal of Experimental Child Psychology*, 104: 239-251. 2009. Print.
10. Plaut, D. C., McClelland, J. L., Seidenberg, M. and Patterson, K.“Understanding Normal and Impaired Word Reading: Computational Principles in Quasi-regular Domains.”*Psychological Review* 103: 56-115. 1996. Print.
11. Rack, J., Hulme, C., Snowling, M. and Wightman, J.“The Role of Phonology in Young Children Learning to Read Words: The Direct-mapping Hypothesis.”*Journal of Experimental Child Psychology* 57(1): 42-71. 1994. Print.
12. Ricketts, J., Bishop, D. V. M. and Nation, K.“Investigating Orthographic and Semantic Aspects of Word Learning in Poor Comprehenders.”*Journal of Research in Reading* 31(1): 117-135. 2008. Print.
13. ...“Orthographic Facilitation in Oral Vocabulary Acquisition.”*Quarterly Journal of Experimental Psychology* 62: 1948-1966. 2009. Print.
14. Share, D. L.“Phonological Recoding and Self-teaching: Sine qua non of Reading Acquisition.”*Cognition* 55: 151-218. 1995. Print.
15. ...“Phonological Recoding and Orthographic Learning: A Direct Test of the Self-teaching Hypothesis.”*Journal of Experimental Child Psychology* 72: 95-129. 1999. Print.

**Contract Teacher**
**Department of English**
**Central Sanskrit University**
**K.J. Somaiya Campus**
**Vidyavihar, Mumbai-77**



# शेखरदृशा अइउण्सूत्रविचारः

✍डॉ. विदुषी बोल्ला

**( निबन्धेऽस्मिन् पारम्परिकरीत्या अइउणसूत्रमाश्रित्य तस्य सञ्ज्ञासूत्रत्वोपपत्तिः, सन्ध्यभावविमर्शः, विभक्त्यनुत्पत्तिबीजम्, कारप्रत्ययाभावकारणञ्च विमृष्टम् । तत्क्रमे एकवाक्यतायाः प्राचीननवीनसम्मतदिशा सोदाहरणं स्वरूपं निरूपितम् । 'आदिरन्त्येने'ति सूत्रार्थश्चोदाहरणसमन्वयसहितः प्रदर्शितः । तथा चायं निबन्धः व्याकरणशास्त्रीयतत्त्वबुभुत्सुभिरवश्यमध्येय इति विभावयामः ।)**

**शोधसारः** - व्याकरणशास्त्रस्योपकारकाणां माहेश्वरसूत्राणां[1] 'आदिरन्त्येन..' इति सूत्रेण सहैकवाक्यतया शक्तिनियामकत्वात् सञ्ज्ञासूत्रत्वमुपपद्यते । एकवाक्यताऽकारस्तु - अन्त्येन इता=इत्सदृशेन णकारादिना सह उच्चार्य्यमाणः आदिः = आदिसदृशः अर्थात् अण्णादिशब्दः अवयवत्वेन बोधकाद्यन्तपदाक्षिप्तस्य समुदायस्य आदिघटितमध्यगानां सञ्ज्ञा इति । एषैकवाक्यता त्रिधा - पदैकवाक्यता (परिभाषाणां पदोपस्थापकत्वपक्षे), पदार्थैकवाक्यता (परिभाषाणां पदार्थोपस्थापकत्वपक्षे), वाक्यैकवाक्यता चेति । अत्र द्वयोः वाक्यार्थयोः कार्य्यकारणभावे सति वाक्यैकवाक्यता । तदभावे पदैकवाक्यता बोध्या । सूत्रेऽस्मिन् संहिताऽविवक्षितत्वात् चादिगणपठितत्वाद्वा सन्धिकार्य्यं न भवति । न चोपजीव्यविरोधात् सन्ध्यभाव इति वाच्यम्, सन्धौ सत्यपि अकारादिवर्णेषु अविकृतेष्वेव अजादिपदशक्तिज्ञानम्, न वर्णान्तरेषु विकृतेषु । न च सन्धिकार्य्ये अकारादिवर्णेषु सन्देहः, सर्वत्र सन्देहस्थले 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमि'[2]ति परिभाषया अकारादिवर्णानां निर्णया सम्भवात् । अत्र अकारादिषु विभक्त्युत्पत्तिस्तु अनुकार्य्यानुकरणयोः अभेदस्वीकारात् शक्तिलक्षणाऽन्यतरज्ञानाधीनोपस्थितत्वाभावेन प्रातिपदिकत्वाभावान्न जायते । अत्र कारप्रत्ययोऽपि अप्रवृत्तिस्वभावात् न प्रवर्त्तते ।

**प्रयुक्तशब्दाः** - सञ्ज्ञासूत्रत्वम्, एकवाक्यता, पदैकवाक्यता, पदार्थैकवाक्यता, वाक्यैकवाक्यता, यथोद्देशपक्षः, कार्य्यकालपक्षः, उपजीव्यः, उपजीवकः, अनुकरणम्, अनुकार्य्यम्, शक्तिनियामकत्वम्, आद्योच्चारणम्, कार्य्यकारणभावः, निरूप्यनिरूपकभावः, संहिताधिकारः, अव्यवहितत्वम्, शक्तिः, लक्षणा, प्रगृह्यसञ्ज्ञा, श्रावणप्रत्यक्षविषयतावच्छेदकः, बहलम्, विधिवाक्यार्थबोधः, आदिः, अन्त्यम्, एककालावच्छेदः, अव्यवहितत्वम्, विशेषप्रतिपत्तिः । वर्णबोधकानां चतुर्दशसूत्राणामाद्यं सूत्रं वर्त्तते - 'अइउण्' इति । सूत्रेऽस्मिन् विचारांशाः सन्ति -

1. माहेश्वरसूत्राणां सञ्ज्ञासूत्रत्वोपपादनम् ।
2. 'आदिरन्त्येन सहेते'ति सूत्रार्थः ।
3. एकवाक्यताऽऽकारः ।
    - (3.1) प्राचीननवीनमते एकवाक्यता ।
    - (3.2) एकवाक्यताभेदः, तदुदाहरणञ्च ।

(3.3) अत्रेदं तत्त्वम् ।

4. एवमन्यत्रापि ।
5. 'अइउण्' इत्यादौ सन्धिः कुतो न?
6. रत्नाकरमतस्य निराकरणम् ।
7. अकारादिषु प्रत्येकस्मात् कथं न विभक्त्युत्पत्तिः ?
8. कारप्रत्ययः कुतो न ?
9. 'वर्णात्कार' इत्यस्य परिष्कृतोऽर्थः ।

1. **माहेश्वरसूत्राणां सञ्ज्ञासूत्रत्वोपपादनम्** -'अइउण्' इत्यादिमाहेश्वरसूत्राणि वर्णक्रमस्य (शेखरे क्रमशब्दः अर्शआद्यजन्तत्वेन क्रमवदर्थपरः) बोधकानि । अन्यथा इणादिप्रत्याहारे अकारादीनामग्रहणम्, अकारादीनाञ्च ग्रहणं प्रसज्येत । अत्र शङ्का - षड्विधेषु सूत्रेषु क्रमबोधकस्य नास्ति समावेशः । पुनः एषु सूत्रत्वव्यवहारः कथमिति ? समादधाति - 'आदिरन्त्येन सहेता'[3] इति सूत्रेण सह एकवाक्यता (वाक्यैकवाक्यता) भवति । तेन 'आदिरन्त्येन...' सूत्रेण अण्प्रत्याहारे जात सति अण्पदे अकारादिणान्तसमुदायनिरूपितशक्तिः अस्ति इति बोधः । एवञ्च माहेश्वरसूत्राणि प्रत्याहारसञ्ज्ञाविधायकसूत्रेण सह मिलित्वा वृत्तिपरिच्छेदकानि (शक्तिनियामकानि) । शक्तिनियामकत्वाच्च इमानि सञ्ज्ञासूत्राणि (क्रमिकवर्णबोधकानि च सन्तीति) । अत्रेदं बोध्यम् - सञ्ज्ञासूत्राणां च कार्य्यं शक्तिनियमनमेव । यथा 'वृद्धिरादैच्'[4] इति सञ्ज्ञासूत्रं वृद्धिपदे आदैज्निरूपिता शक्तिः इति वृद्धिपदस्य शक्तिं नियमयति ।

अथ उभयोः एकवाक्यता कथं भवतीति प्रश्ने आह - वर्णक्रमबोधनस्य उयोगिता प्रत्याहारं विना न सम्भवति । प्रत्याहारविधायकं च 'आदिरन्त्येन...' सूत्रम् । अस्य सूत्रस्य च आद्यन्तपदयोः अर्थनिर्णयः 'अइउण्' इत्यादिसूत्राधीनः । एवं तयोः सापेक्षत्वात् एकवाक्यता बोध्या ।

2. **'आदिरन्त्येन सहेते'ति सूत्रार्थः** - अत्रेदमवगन्तव्यम् -'अन्त्येन इता सहितः आदिः' कुत्रापि नोपलब्धः। यथा अच्प्रत्याहारार्थम् अन्त्येत्पदेन 'ऐऔच्' इति चकारो गृह्यते किन्तु चकारेण सह आदिवर्णः अकारो नास्ति । स तु 'अइउण्' इति सूत्रे । मध्ये बहूनां व्यवधानम् । अच् इत्यादिप्रत्याहारे ('इको यणचि' इत्यादौ) अकारचकारयोः साहित्ये सत्यपि अत्र इत्सञ्ज्ञकचकारो न वर्तते (उपदेशाभावात् । उपदेशो नाम आद्योच्चारणम् । तच्च अज्ञातस्वस्वरूपज्ञापकोच्चारणम् । यदुच्चार्यते पाणिन्यादिभिः तदेव यदि बुध्यते उपदेशत्वं तस्य। यथा सु, ङीप् इत्यादिषु । अच्, हल् इत्यादिषु उच्चरितेषु तत्स्था वर्णा न बुध्यन्ते (अपितु सञ्ज्ञी बुध्यते) इति तत्र नोपदेशत्वम्।) नापि तत्र मध्यमो वर्णः । एवञ्च प्रत्याहारनिर्माणमसम्भवम् ।

अतः 'आदिरन्त्येन' सूत्रसामर्थ्यात् आदिपदम् आदिसदृशे, अन्त्यपदम् अन्त्यसदृशे इत्पदञ्च इत्सदृशे अर्थे लाक्षणिकम् । तथाहि अन्त्येत्सञ्ज्ञकसादृश्यवता वर्णेन सहितो यः उच्चार्य्यमाणो विवक्षितादिसादृश्यवान् शब्दः, सः अवयवत्वेन बोधकाद्यन्तपदाक्षिप्तस्य समुदायस्य आदिघटितमध्यगानां वर्णानां सञ्ज्ञेत्यर्थः। यथा अन्त्येत्सञ्ज्ञकस्य 'ऐऔच्' इत्यस्य चकारस्य, सादृश्यवान् वर्णः 'इको यणचि'[5] इति सूत्रस्थितस्य अच् इत्यस्य चकारः, तेन वर्णेन सहितः उच्चार्य्यमाणः, विवक्षितादिः अइउण् इत्यस्य अकारः तेन सादृश्यवान् शब्दः 'इको यणचि' इति सूत्रस्थः अच् शब्दः, सः अवयवत्वेन बोधकाद्यन्तपदाक्षिप्तस्य 'अइउण्' इत्यारभ्य 'ऐऔच्' इति समुदायस्य आद्यकारघटितमध्यगानाम् - अ इ उ ऋ लृ ए ओ ऐ औ वर्णानां सञ्ज्ञेति ।

3. **एकवाक्यताऽऽकारः** - अन्त्येन इता = इत्सदृशेन णकारादिना सह उच्चार्य्यमाणः आदिः = आदिसदृशः अर्थात् अण् आदिशब्दः अवयवत्वेन बोधकाद्यन्तपदाक्षिप्तस्य समुदायस्य आदिघटितमध्यगानां सञ्ज्ञा इति।

(3.1) **प्राचीननवीनमते एकवाक्यता** - तत्र प्राचीनाः - यथोद्देशपक्षे[6] परिभाषया, सञ्ज्ञासूत्रेण च सह विधिशास्त्रस्य वाक्यैकवाक्यता, उभयोः विना विधिशास्त्रमेव पूर्वं वाक्यार्थबोधवत्त्वात् । तस्मिन्नित्यादि - परिभाषाणां, 'वृद्धिरादैजि' त्यादिसञ्ज्ञासूत्राणाञ्च बोधः उपजीव्यः, 'इको यणचि', 'वृद्धिरेची'[7] त्यादिशास्त्रजन्यः अप्रामाण्यज्ञानानास्कन्दितो लक्ष्यधर्मिकसाधुत्वप्रकारको बोधः उपजीवकः । उमजीवकबोधस्यास्य सञ्ज्ञापरिभाषाबोधाधीनत्वात् । कार्य्यकालपक्षे[8] च पदैकवाक्यता, विधिशास्त्रेण सह सञ्ज्ञापरिभाषयोः बोधजनकत्वात् । परिभाषाघटकस्य पूर्वपदार्थस्य निर्दिष्टपदार्थस्य च विधिसूत्रघटके इक्पदार्थे अच्पदार्थे च क्रमशः अभेदसम्बन्धेनान्वयः । एवं सञ्ज्ञासूत्रघटके आदैच्पदार्थे सूत्रघटकवृद्धिपदस्य अभेदेनान्वयः । अभेदसम्बन्धस्य प्रकारताविशेष्यते निरूप्यनिरूपकभावापन्ने भवतः । तयोः प्रयोजकत्वं पूर्वादिपदानाम्, तद्घटितत्वञ्च परिभाषाविधिसूत्रयोः सञ्ज्ञाविधिसूत्रयोश्च ।

नवीनास्तु - पक्षद्वयेऽपि परिभाषाणां पदैकवाक्यतयैव बोधकत्वम्, 'षष्ठी स्थाने'[9] इति सूत्रभाष्यात् । तत्र दीपो यथा स्वावयवप्रभासम्बद्धपदार्थप्रकाशकस्तथा परिभाषापीत्युक्त्या दीपदृष्टान्तेन पदैकवाक्यता लभ्यते । वाक्यैकवाक्यतायां तु अवयवसम्बन्धाभावाद् दृष्टान्तासङ्गतिः स्यात् । सञ्ज्ञासूत्राणाञ्च वाक्यैकवाक्यतयैव बोधकत्वम्, सञ्ज्ञासूत्रजवाक्यार्थबोधस्य विधिसूत्रजबोधं प्रति कारणतया, कारणत्वस्य कार्य्यनियतपूर्ववृत्तित्वेन एककालिकोत्पत्तिकत्वस्यासम्भवेन पदैकवाक्यत्वस्य वक्तुमशक्यत्वात् । परिभाषाजन्यबोधस्य तु न विधिसूत्र - घटकपदधर्मिकशक्तिग्राहकत्वमिति न सूत्रघटकपदजन्यबोधकारणत्वमिति न वाक्यैकवाक्यत्वम्, अपि तु पदैकवाक्यत्वमेवेति ।

(3.2) **एकवाक्यताभेदः, तदुदाहरणञ्च** - एकवाक्यता त्रिधा - पदैकवाक्यता (परिभाषाणां पदोपस्थापकत्वपक्षे), पदार्थैकवाक्यता (परिभाषाणां पदार्थोपस्थापकत्वपक्षे), वाक्यैकवाक्यता चेति ।

**पदैकवाक्यता** - परस्परनिरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदघटितत्वं पदैकवाक्यत्वम् । यथा - 'तस्मिन्निति निर्दिष्टे पूर्वस्य'[10] त्यस्य 'इको यणचि' इति विधिशास्त्रेण सह । तथा हि - 'तस्मिन्नि'त्यतो 'निर्दिष्टे', 'पूर्वस्य' इति पदद्वयम् 'इको यणचि' इत्यत्रोपतिष्ठते । 'निर्दिष्टे अचि पूर्वस्येको यण् स्यात् ' इति च सूत्रार्थः सम्पद्यते । तत्र 'निर्दिष्टे', 'पूर्वस्य' इति प्रकारताप्रयोजकं पदम्, 'अचि', 'इकः' इति च तन्निरूपितविशेष्यताप्रयोजकं पदम् । अतश्च निरूप्यनिरूपकभावापन्नविषयता (प्रकारता) प्रयोजकमिदं पदद्वयम् - 'निर्दिष्टे' इति, 'अचि' इति च, तद्घटितत्वम् - 'इको यणचि' इति सूत्रीयवाक्यस्येति समन्वयो बोध्यः ।

**पदार्थैकवाक्यता** - (अर्थनिष्ठ) परस्परनिरूप्यनिरूपकभावापन्नविषयताश्रयत्वं पदार्थैकवाक्यत्वम् । यथा पूर्वोक्तयोः द्वयोः । 'निर्दिष्टे', 'अचि' इत्यनयोर्यौ अर्थौ अव्यवहितत्वमच्त्वञ्च, अपि च 'पूर्वस्य', 'इकः' इत्यनयोः यौ अर्थौ पूर्वत्वमिक्त्वञ्च, तयोः तयोः परस्परं निरूप्यनिरूपकभावापन्नविषयता (प्रकारता-विशेष्यता) श्रयत्वमस्ति ।

**वाक्यैकवाक्यता** - उपजीव्योपजीवकभावापन्नबोधप्रयोजकत्वं वाक्यैकवाक्यत्वम् । यथा सञ्ज्ञासूत्राणां 'वृद्धिरादै'च् इत्यादीनां वाक्यार्थबोधः उपजीव्यः, सञ्ज्ञापदार्थज्ञानाधीनत्वेन विधिवाक्यार्थबोधः 'वृद्धिरेचि' इत्यादिवाक्यार्थबोधः उपजीवकः इति कृत्वा द्वयोर्वाक्ययोः एकवाक्यतायाम् उपजीव्योपजीवकभावापन्नो बोधः । तादृशबोधप्रयोजिका इयमेकवाक्यता वाक्यैकवाक्यता । तथा हि 'वृद्धिरेची'[11] त्यस्य एजव्यवहितपूर्वत्वविशिष्टावर्णे सति पूर्वपरयोः स्थाने आदैज्रूपवृद्धिरेकादेशो भवत्वित्यर्थः । अत्र 'वृद्धिरादैच्', 'वृद्धिरेचि' इत्यनयोः वाक्यैकवाक्यता ।

> **(३.३) अत्रेदं तत्त्वम्** - (1) शाब्दबोधे शक्तिज्ञानं कारणम् । कारणं पूर्ववर्त्ति । तस्मात् कारणभूतस्य शक्तिबोधकस्य सञ्ज्ञासूत्रस्य पूर्वं वाक्यार्थबोधः । तत्पश्चात् विधिसूत्रस्य बोधः । एवं हि एककालावच्छेदेन तयोः असत्त्वात् न तत्तत्सूत्रस्य पदानां विशेष्यविशेषणभावः । अत एव च नात्र पदैकवाक्यता । (2) परिभाषा तु विधिशास्त्रस्य इष्टलाभाय, अनिष्टपरिहाराय सहायिका, न तु विधिशास्त्रवाक्यार्थबोधाय । सञ्ज्ञा तु विधिशास्त्रवाक्यार्थबोधाय सहायिका । अतस्तयोः एकवाक्यतायां भेदः ।

अत्रायं निष्कर्षः - द्वयोः वाक्यार्थयोः कार्य्यकारणभावे सति वाक्यैकवाक्यता । तदभावे पदैकवाक्यता बोध्या ।

4. **एवमन्यत्रापि** - यथा 'अइउण्' इत्यादि क्रमिकवर्णबोधकम्, अपि च, एकवाक्यतया अजादिसञ्ज्ञा-विधायकत्वात् सञ्ज्ञासूत्रम् इति उभयविधम्, तथैव 'स्वौजस..'[12] सूत्रमपि 'आदिरन्त्येन....' इति सूत्रेण सहैकवाक्यतया सुप् सञ्ज्ञाविधायकत्वात् सञ्ज्ञासूत्रम्, तत्तत्प्रातिपदिकात् स्वादिप्रत्ययविधायकत्वाच्च विधिसूत्रमपि भवति । एकवाक्यता तु अन्त्येन इता = तत्सदृशेन पकारेण सह उच्चार्य्यमाणः आदिः = तत्सदृशः अर्थात् सुप् शब्दः आद्यन्ताक्षिप्तस्य समुदायस्य आदिघटितमध्यगानां सञ्ज्ञेति ।

5. **'अइउण्' इत्यादौ सन्धिः कुतो न ?** - सन्धिप्रकरणे संहिताया[13] अधिकारः । तस्मात् संहितायामेव सन्धिः । 'अइउण्' इत्यादौ संहिताया अविवक्षितत्वात् न गुणादिसन्धिकार्य्यम् (सन्धौ च अ + इ = ए + उण् = युण् इति स्यात्)।

    केचित्तु अइउ-इत्यादीनां चादिगणपठितत्वात् 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्चे'[14]ति सूत्रेण निपातसञ्ज्ञायाम्, 'निपात एकाजनाङ्'[15] इति प्रगृह्यसञ्ज्ञायाम्, 'प्लुतप्रगृह्या अचि नित्यम्'[16] इति प्रकृति-भावे च न सन्धिकार्य्यमित्याहुः ।

6. **रत्नाकरमतस्य निराकरणम्** - वर्णोपदेशकालेऽजादिसञ्ज्ञानामनिष्पादात् सन्धिर्न इति कैयटः । अस्य व्याख्यां कुर्वाणः सिद्धान्तरत्नाकरकारो रामकृष्णसूरिः 'उपजीव्यविरोधात् सन्धिर्न' इत्याह । अत्रायमाशयः - उपजीवयतीति उपजीव्यः = जनकः । उपजीवतीति उपजीवकः = जन्यः । अस्तु । सन्ध्यभावे अवि-कृते 'अइउ' इत्यादिवर्णे पूर्वम् अजादिपदशक्तिज्ञानम्, तत्पश्चात् 'आद्- गुणः'[17] इत्यादिवाक्यार्थबोधः, वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वात् । वाक्यार्थबोधानन्तरम् उपेन्द्रः इत्यादिवत् 'अइउण्' इत्यादौ सन्धौ सति विकृतरूपस्य श्रवणं स्यात् । तदित्थं सन्धिकार्य्ये कृते विकृतरूपश्रवणेन अविकृतरूपायाः ज्ञातायाः अजादिपदशक्त्याः विरोधः । एवञ्च अविकृतरूपे गृहीता अजादिपदशक्तिः उपजीव्या । 'आद्गुणः' उपजीवकः । अतः सन्निपातपरिभाषया 'आद्गुणः' इति सूत्रे वाक्यार्थबोधजनकं शक्तिज्ञानं निमित्तं न भवतीति ।

    तन्न । नात्रोपजीव्यविरोधः, यतो हि सन्धौ सत्यपि अकारादिवर्णेषु अविकृतेष्वेव अजादिपद-शक्तिज्ञानम् , न वर्णान्तरेषु विकृतेषु । न च सन्धिकार्य्ये अकारादिवर्णेषु सन्देहः, सर्वत्र सन्देहस्थले 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमि'ति परिभाषया अकारादिवर्णानां निर्णयात् ।

7. **अकारादिषु प्रत्येकस्मात् कथं न विभक्त्युत्पत्तिः ?** - अर्थवत्सूत्रे[18] शक्तिलक्षणान्यतरज्ञानाधीनोप-स्थित्या अर्थविषयकबोधजनकस्यैव अर्थवत्पदेन ग्रहणम् । 'अइउण्' इत्यादीनि श्रुतेः अनुकरणानि । अनु-कार्य्या च श्रुतिः । 'अनुकरणानुकार्य्ययोः अभेदः' (अर्थात् सादृश्यम्) इति पक्षे अनुकरणेन अनुकार्य्यस्य सादृश्यसम्बन्धेनैव उपस्थितिः (न तु वृत्त्या)। तथा च सादृश्यसम्बन्धेन उपस्थितस्य अनुकार्यस्य

बोधकत्वेन अनुकरणस्य शक्त्या लक्षणया वा बोधकत्वाभावात् न प्रातिपदिकत्वम् । अत एव च न विभक्तिः । यद्वा, सौत्रत्वात् विभक्तिर्नोत्पद्यते । सूत्राणामिदं (मूलं छन्दः) सौत्रम्, तत्त्वात् छन्दस्त्वात् इत्यर्थः । 'अनुकरणेन सौत्रत्वाच्च'[19] इत्यत्र चकारः समुच्चयार्थकः । तथाहि अनुकरणपक्षे यथा प्रातिपदिकसञ्ज्ञाप्रतिबन्धद्वारा विभक्तेरनुत्पत्तिः, तथैव सौत्रत्वाश्रयणपक्षेऽपि कल्प्यतामिति ।

8. **कारप्रत्ययः कुतो न ?** – ननु चतुर्दशसूत्रेषु 'वर्णात्कारः' इति वार्त्तिकेन कारप्रत्ययः कुतो नेति प्रश्ने आह नागेशः 'कारप्रत्ययोऽपि न, बाहुलकादि'ति । अत्रेदं बोध्यम् – 'रोगाख्यायां ण्वुल् बहुलम्'[20] इति सूत्रात् बहुलग्रहणमत्रानुवर्त्तते । 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव' इत्येवं बाहुलकस्य चतुर्विधः स्वभावः । तथा चात्र अप्रवृत्तिस्वभावात् कारप्रत्ययो न प्रवर्त्तते ।

9. **वर्णात्कार इत्यस्य परिष्कृतोऽर्थः** – 'वर्णविशिष्टात्कारप्रत्यय' इति 'वर्णात्कारः' इति वार्त्तिकार्थः । वैशिष्ट्यञ्च स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मावच्छिन्नविषयताप्रयोजकबोधतात्पर्य्यणोच्चरितत्वस्वेत-रोच्चारणार्थकाकारातिरिक्तवर्णाघटितत्वेत्युभयसम्बन्धेन। अकारककारादिरूपे लक्ष्ये स्वपदेन अकारः, ककारो वा ग्राह्यः, तद्वृत्तिः = तन्निष्ठो यः श्रावणप्रत्यक्षविषयतावच्छेदको धर्म्मः = अत्वकत्वादिरूपः (शब्दस्य प्रत्यक्षता श्रवणेन्द्रियेण भवति, यथा अशब्दस्य, कशब्दस्य । यस्य श्रवणेन्द्रियेण प्रत्यक्षता, सः श्रावणप्रत्यक्षविषयः कथ्यते । तस्मिन् विषये श्रावणप्रत्यक्षविषयता तिष्ठति । तस्याः विषयतायाः अवच्छेदको विषयनिष्ठो धर्म्मः अत्वकत्वादिरूपः), तद्धर्म्मावच्छिन्नाकारककारादिनिष्ठविषयतायाः प्रयोजकबोधतात्पर्य्येण उच्चरितत्वम् अकारककारयोः, एवञ्च स्वम् = अकारः, ककारो वा, तस्माद् वर्णाद् इतरो यः उच्चारणार्थकाद् अकाराद् अतिरिक्तो वर्णः = इकारखकारादिः, तेन अघटितत्वमपि अकारककारयोः। अतस्ताभ्यां कारप्रत्ययः सिद्धः ।

घि[21] नदी[22] पदयोः, ह्रस्वानुनासिकपदयोः, किकुपदयोश्च प्रथमसम्बन्धस्य सत्त्वेऽपि स्वेतरोच्चारणार्थ-काकारातिरिक्तेन घकारनकारादिना घटितत्वेन तादृशवर्णाऽघटितत्वाभावेन द्वितीयसम्बन्धस्य विरहान्न दोषः ।

**सन्दर्भाः**

1. महेश्वरादागतानि माहेश्वराणि, तत आगत इत्यनेन अण्प्रत्ययः ।
2. परिभाषेन्दुशेखरे, प्रथमपरिभाषा ।
3. अष्टाध्यायां 1/1/71 ।
4. अष्टाध्यायां 1/1/1 ।
5. अष्टाध्यायां 6/1/77 ।

6. उद्देशमनतिक्रम्य यथोद्देश्यम् । उद्देश उपदेशदेशः । तथा हि उपदेशमनतिक्रम्य सञ्ज्ञाशास्त्रं परिभाषाशास्त्रञ्च विधिशास्त्रमुपकरोतीति परिभाषेन्दुशेखरे उक्तम् ।
7. अष्टाध्यायां 6/1/88 ।
8. कार्येण - तद्विधायकशास्त्रेण काल्यते - स्वसन्निधिं प्राप्यते, कार्येण स्वसंस्काराय स्ववृत्ति- लिङ्गचिह्नितपरिभाषाणामाक्षेप इति यावत् । तथाहि - यत्र कार्य्यं, तत्र सञ्ज्ञापरिभाषासूत्रमुप- स्थितं भवतीति परिभाषेन्दुशेखरे उक्तम् ।
9. अष्टाध्यायां 1/1/49 ।
10. अष्टाध्यायां 1/1/66 ।
11. अष्टाध्यायां 6/1/88 ।
12. अष्टाध्यायां 4/1/2 ।
13. अष्टाध्यायां परः सन्निकर्षः संहिता 1/4/109 ।
14. गणसूत्रम् ।
15. अष्टाध्यायां 1/1/14 ।
16. अष्टाध्यायां 6/1/125 ।
17. अष्टाध्यायां 6/1/87 ।
18. अष्टाध्यायां 1/2/45।
19. शेखरे ।
20. अष्टाध्यायां 3/3/108 ।
21. यू स्त्र्याख्यौ नदी इति अष्टाध्यायां 1/4/3 ।
22. शेखरे घ्यसखि इति अष्टाध्यायां 1/4/7 ।

## सन्दर्भग्रन्थसूची


1. व्या.महाभाष्यम्, सम्पादकः - श्रीगुरुप्रसादशास्त्री, प्रतिभाप्रकाशनम्, देहली, प्रथमसंस्करणम्, 1938 ।
2. पाणिनीयः अष्टाध्यायीसूत्रपाठः, सम्पादकः - श्री प. ब्रह्मदत्तजिज्ञासु, राधाप्रेस, देहली, सप्तदशं संस्करणम्, 2005 ।
3. परमलघुमञ्जूषा, सम्पादको व्याख्याकारश्च - प्रो. बोधकुमारझाः, हंसाप्रकाशनम्, जयपुर, संस्करणम्, 2018 ।
4. लघुशब्देन्दुशेखरः, सम्पादकः-प्रो. बालशास्त्री, चौखम्बासुरभारतीप्रकाशनम्, वाराणसी, संस्करणम्, 2013।

5. समासस्तदव्ययीभावश्च, प्रो. बोधकुमारझाः, विद्यानिधिप्रकाशनम्, देहली, प्रथमसंस्करणम्, 2011।
6. प्रौढनिबन्धसौरभम्, आचार्यविश्वनाथमिश्रः, राष्ट्रियसंस्कृतसाहित्यकेन्द्रम्, जयपुरम्, प्रथमसंस्करणम्, 2003।
7. तत्त्वबोधिनीसमाख्यव्याख्यासंवलितासिद्धान्तकौमुदी, चौखम्बासंस्कृतप्रतिष्ठानम्, देहली, सं., 2010 ।
8. वैयाकरणभूषणसारः प्रभादर्पणव्याख्याद्वयोपेतः, सम्पादकः - श्रीबालकृष्णपञ्चोली, चौखम्बा-संस्कृतसंस्थानम्, संस्करणम्, वि.सं. 2068, ई. 2012 ।
9. परमलघुमञ्जूषा, भावप्रकाशिका, बालबोधिनी संस्कृतहिन्दीव्याख्योपेता, व्याख्योपेता, व्याख्याकारः सम्पादकश्च - डा. जयशङ्करलालत्रिपाठी, चौखम्बाकृष्णदासअकादमी, वाराणसी, चतुर्थसंस्करणम्, 2011 ।

**सहायकाचार्या**
**श्रीसोमनाथसंस्कृतविश्वविद्यालयः**
**गुजरात ।**



# यदागमपरिभाषाविमर्शः

डॉ. नवीनकुमारमिश्रः

**( सर्वेषु शास्त्रेषु अव्याप्त्यतिव्याप्तिं वारयितुमिष्टस्थले च लक्षणं प्रापयितुं शास्त्रकृद्भिः स्वस्वशास्त्रवासनानुरूपा परिभाषा कल्प्यते । शब्दशास्त्रेऽपि सन्ति तादृश्यो बह्व्यः परिभाषाः । तासु परिभाषासु च द्विविधत्वम्-पाणिन्युच्चरितत्वम्, तदनुच्चरितत्वे सति पातञ्जलमहाभाष्यसम्मतत्वञ्च । यदागमपरिभाषा च तत्र द्वितीयकोटिस्था । इयं हि लोकन्यायसिद्धा, ज्ञापकसिद्धा च । भट्टनागेशविरचिते परिभाषेन्दुशेखरे तट्टीकादौ चास्या विषये महान् विचारः कृतः । प्रकृतनिबन्धे त एव केचन विषया अत्र निरूपिताः ।)**

**शोधपत्रसारः** -प्रस्तुतशोधपत्रे यदागमपरिभाषाविमर्शसन्दर्भे विविधांशाः शोधपबन्धे विचारिताः । तथाहि - परिभाषावतरणम्, परिभाषार्थः, यमुद्दिश्येति व्याख्यान फलम्, 'आने मुगिति सूत्रे मुक् सामर्थ्यम्, वर्णग्रहणे परिभाषायाः प्रवृत्त्यप्रवृत्तिविचारः, अनागमकानां सागमका आदेशा इत्यादीनां चर्चा स्पष्टतया प्रकृतपत्रे चर्चिता । अनेन शोधपत्रेण यदागमपरिभाषाविषये जिज्ञासूनां बुद्धौ विषयबोधः भविष्यतीति ।'

**पारिभाषिकशब्दाः** - 1. यदागमः, 2. तद्गुणीभूताः, 3. निर्दिश्यमानत्वम्, 4. सेड्विधिः, 5. अनागमकाः, 6. सागमकाः, 7. अर्थवद्ग्रहणम्, 8. प्रनिदारयति, 9. अनित्यत्वम्, 10. आगमसमभिव्याहारः, 11. पुगन्तः ।

**प्रस्तावना** - ननु 'दाधा घ्वदाप्'[1] इति सूत्रे दाधेतिविशिष्टरूपस्योपादानात् 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्'[2] इति परिभाषाप्रवृत्त्या अर्थवतोरेव दाधोर्ग्रहणात् आगमसमभिव्याहारे आगमविशिष्ट एवार्थवत्त्वस्वीकारात् 'प्रणिदापयति इत्यादौ पुगागमरहितस्य 'दा' इत्यस्यानर्थकतया दापो दारूपत्वाभावतया च घुसंज्ञा न स्यात् घुसंज्ञाभावेन 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोति देग्धिषु च'[3] इति णत्वं न स्यादतः परिभाषा स्वीकर्त्तव्या 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्त' इति ।

**परिभाषार्थः** - यदागमा इति तद्गुणीभूता इत्यत्र हेतुः तद्गुणीभूता इति तद्ग्रहणेन गृह्यन्त इत्यत्र हेतुः । यतः ततः इति पदद्वयञ्चाध्याहार्यम् तथा चेत्थं परिभाषार्थः फलति - यः आगमो यदागमिनमुद्दिश्य विहितः स आगमस्तस्यागमिनो गुणीभूतः अर्थात् शास्त्रेण 'मिदचोऽन्त्यात्परः'[4] आद्यन्तौ टकितौ[5] इत्यादिना तदवयवत्वेन बोधितः यतस्तदवयवत्वेन बोधितः अतस्तद्ग्रहणेन तद्ग्राहकेन अर्थात् तद्बोधकेन शब्देन गृह्यते बोध्यत इति । यथा लोके देवदत्तस्याङ्गधिक्येऽपि देवदत्त इति कथनेन तद्विशिष्टोऽभिहितो भवति तथा 'दा' इत्यनेन पुग्विशिष्टस्य दापो ग्रहणेन प्रणिदापयति इत्यादौ घुसंज्ञा तन्मूलकं णत्वञ्च सिद्ध्यति ।

**यमुद्दिश्य विहित इत्युक्तेः फलम्** – 'यमुद्दिश्य विहित' इत्युक्तत्वात्प्रनिदारयति इत्यादौ दारित्यस्य घुसंज्ञायाः अभावः । तत्र रेफ आकारमुद्दिश्य विधीयते, न तु दाधातुमुद्दिश्य तत्रानया दारि दारूपत्वातिदेशाप्रवृत्तेः। यदि 'यदागम' पदस्य तादृशी व्याख्या नाङ्गीक्रियते तदा अवयवावयवः समुदायावयवो भवतीति न्यायेन आ-रूपावयवावयवस्य रेफस्य दावयवत्वे साधितेऽनया परिभाषया दाप इव दारोऽपि दारूपतापादनाद् घुसंज्ञापत्तेः ।

**परिभाषाज्ञापनम्** – यदागमपरिभाषा 'दीधीवेवीटाम्'[6] इति शास्त्रेणेड्ग्रहणेन ज्ञापिता । अन्यथा भविता इत्यादौ 'भवित् + आ' इत्यवस्थायाम् अङ्गावयवतास्प्रत्ययावयवस्येटोऽङ्गावयवत्वाभावेन 'पुगन्तलघूपधस्यचेति'[7] गुणप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव । अत एव शेरते इत्यत्र सार्वधातुके परे शीधातोर्गुणः सिद्ध्यति ।

**आने मुगिति मुग्विधानसामर्थ्यम्** – 'आने मुक्'[8] इति मुगागमविधानवैर्थ्यापत्त्या तत्सामर्थ्येन अस्याः परिभाषाया अनित्यत्वज्ञापनम् । तदभावे 'पचमान' इत्यादौ पच + आन इति स्थिते आकारस्य मुग्विधाने मुगागमे वा यदागमन्यायेन मुग्विशिष्टे अर्थादम्शब्देऽक्त्वातिदेशे 'अकः सवर्णे दीर्घ'[9] इति दीर्घे पचमान इति रूपापत्तौ मुग्विधानवैयर्थ्यं प्रपञ्चितम् । अनया परिभाषया अनित्यत्वादेव दिदीये इत्यत्र 'दीङो युडचि'[10] इति शास्त्रविहित युड्विशिष्टेऽनयाच्त्वातिदेशे 'एरनेकाचोऽसंयोगपूर्वस्य'[11] इति यण्न । जहार इत्यत्र 'जहृ + अ' इति स्थिते 'अचो-ञ्णिति'[12] इति वृद्धौ रपरे आर् शब्देऽनया परिभाषया आत्वातिदेशे 'आत औ णलः'[13] इति णलः न औत्वमिति ।

**वर्णग्रहणे परिभाषाप्रवृत्त्यप्रवृत्तिरिति** – 'आने मुगिति' 7.2.82 शास्त्रेण पचमान इत्यादौ मुग्विधानसामर्थ्येन वर्णग्रहणेऽसौ यदागमपरिभाषा न प्रवर्तते इति प्राञ्चः तन्नेति नागेशाभिप्रायः भाष्यविरोधात्, तथाहि अकारस्याङ्गावयवस्य मुगित्यर्थे पचमान इत्यादौ 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्-विङोः'[14] इत्यनुदात्तस्वरो न स्यादित्याशङ्क्य 'अदुपदेशभक्तस्तद्ग्रहणेन ग्रहीष्यते' इति समाधानभाष्यविरुदधं स्यात्। अत्र हि भाष्यमानेन पचमान इत्यत्रानया परिभाषया अदुपदेशत्वम् आदाय स्वरसिद्धिः उक्ता । अदुपदेशत्वं च वर्णमात्रवृत्तिधर्मघटितधर्मः, न चास्माद् भाष्यात् वर्णमात्रवृत्तिधर्मघटितधर्मातिदशे अस्याः परिभाषायाः प्रवृत्तिः अङ्गीक्रियताम्, वर्णमात्रवृत्तिधर्मातिदेशे चाप्रवृत्तिरस्तु, इदं मतं साध्विति वाच्यम् । ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडित्यर्थे कुर्वन्नास्ते इत्यत्र कुर्वन् + आस्ते इति स्थिता नकारस्यादौ ङमो ह्रस्वादचि ङमुण्नित्यम्[15] इति नुटि प्रथमनकारस्यापदान्तत्वात् 'पदान्तस्य'[16] इति शास्त्रेण णत्वप्रतिषेधो न सिध्येत् इति विचिन्त्य 'यदागमपरिभाषया प्रथमनकारस्यापि पदान्तग्रहणेन णत्वप्रतिषेध भाष्यविरोधः पदान्तनत्वस्य वर्णमात्रवृत्तिधर्मत्वात् ।' यदि चोच्यते यत् कुर्वन्नास्ते इत्यत्र प्रथमनकारे नत्वं तु प्रकृत्या सिद्धम्, अतस्तन्नानयातिदिश्यते, पदान्तत्वधर्मस्य चानयातिदेशे न भाष्यविरोधः, तस्य पदान्तत्वधर्मस्य वर्णमात्रवृत्तित्वाभावादिति तर्हि वर्णग्रहणेऽस्याः अप्रवृत्तिस्वीकारे अर्शब्देऽनया अत्वम् आर्शब्दे चानया आत्वञ्चातिदिश्य 'ऋकारस्य गुणवृद्धी अरारावेवेति' भाष्यविरोध इति । न च ऋकारस्य गुणवृद्धी अरारावेति कथने भाष्यकारेणेयं परिभाषा प्रवर्तितेति वाच्यम्, 'रदाभ्याम् निष्ठातो नः पूर्वस्य च दः'[17]

इति शास्त्रोक्तो गुणो भवति वृद्धिर्भवति रेफशिरा गुणवृद्धिसंज्ञकोभिनिवर्तते इति भाष्यं वर्णग्रहणेऽस्याः अप्रवृत्तौ विरुद्धं स्यात्। यदि भाष्यमिदमित्थं व्याख्यायते यदकाराकारश्च गुणवृद्धिसंज्ञकोऽरेफशिरा 'उरण् रपर'[18] इति शास्त्रेणाभिनिवर्तते तदा प्राचां मतं युक्तमिति वर्णग्रहणेऽस्या अप्रवृत्तिस्वीकारे न किमपि भाष्यविरुद्धं स्यात् ।

**आनगमकानां सागमका आदेशाः** - आर्धधातुकस्येडागम इत्यर्थे ज्ञाते नित्येषु शब्देषु आगमविधानान्-पपत्त्याऽर्थापत्तिमूलकवाक्यन्तरकल्पनेनेड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्त्तव्येति । एवञ्चादेशेष्विवात्रापि बुद्धि-विपरिणामे न नित्यत्वक्षतिः । स्थानिवत्सूत्रे च नेदृशादेशाग्रहणं साक्षादष्टाध्यायीबोधितस्थान्यादेशभावे चारितार्थ्यात् । किञ्चैवं सति स्थानिबुद्ध्यैव कार्यप्रवृत्या 'निर्दिश्यमानस्ये'ति[19] परिभाषाया अप्राप्त्याऽडागमसहितस्य पिबाद्या-देशापत्या लावस्थायामडिति भाष्योक्तसिद्धान्तासङ्गतिः । स्थानिवद्भावविषये निर्दिश्यमानस्येति परिभाषायाः प्रवृत्तौ तिसृणामत्यत्र परत्वात्तिस्रादेशे स्थानिवद्भावेन त्रयादेशमाशङ्क्य सकृद्गतिन्यायेन[20] समाधानपरभाष्यासङ्गतिः। 'एरुः'[21] इत्यादौ स्थानषष्ठीनिर्देशात्तदन्तपरतया पठितवाक्यस्यव समुदायादेशपरत्वेनादेशग्रहणसामर्थ्यात्तस्य स्थानि-वत्सूत्रे ग्रहणेन न दोषः । तत्र च आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इति 'अचः परस्मिन्पूर्वविधौ'[22] इत्यादेर्नासङ्गतिः । एतेन यदागमपरिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम् ।

**निष्कर्षः** - वस्तुतस्तु 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषा स्थानिवत्सूत्रविषये न सर्वत्र प्रवर्तते, किन्तु यस्य निर्दिश्यमानत्वं तस्यादेशः भवति यस्य च न निर्दिश्यमानत्वं तस्यादेशो न भवति । स्थानिवत्सूत्रे च निर्दिश्यमानसूत्रोक्तादेशग्रहणफलनिरूपणपरभाष्यसिद्धान्तानुसारेण सर्वविधानामादेशानां ग्रहणमङ्गीकृत्य स्थानिव-त्सूत्रेणैव गतार्थत्वात् यदागमपरिभाषा न मन्तव्या । निर्दिश्यमानत्वञ्च षष्ठीप्रकृतिजन्योपस्थितिविषयत्वे सति षष्ठी-प्रकृतिजन्योपस्थितिविषतयाश्रयसमभिव्याहृतवर्णाघटितत्वम् । तथाच अपिबदित्यत्र अपा इत्यस्य निरुक्तनिर्दिश्य-मानत्वाभावान्न पिबादेशापत्तिदोषः, किन्तु पाशब्दस्यैवति तस्यैव पिबादेशः 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' 7.3.78 इत्यत्र षष्ठीसत्त्वात् तादृशषष्ठीप्रकृतिजन्योपस्थितिविषयता-श्रयः पाः, तत्समभिव्याहृतः अकारः, तद्घटितत्वमपाशब्दस्य, अघटितत्वञ्च पाशब्दस्येति निर्दिश्यमानत्वात्तस्यैव पिबादेशः । तिसृणामित्यत्र चेत्थं समन्वयः त्रेस्त्रयः 6.3.48 इत्यत्र षष्ठीप्रकृतिः त्रिः तज्जन्योपस्थितिविषयत्वं स्थानिवद्भावेन तिसृशब्दस्य, तत्समभिव्याहृत उदासीन- स्तदघटितत्वमपि तिसृशब्दस्यैवेति प्राप्तत्रयादेशो भाष्यकारेण सकृद्गतिन्यायेन वारित इति ।

**सन्दर्भाः**


1. पा. अ 1.1.20 ।
2. प. शे. 15 ।
3. पा. अ. 8.4.17 ।

4. पा. अ. 1.1.47 ।
5. पा. अ. 1.1.46 ।
6. पा. अ. 1.1.6 ।
7. पा. अ. 7.3.86 ।
8. पा. अ. 7.2.82 ।
9. पा. अ. 6.1.101 ।
10. पा. अ. 6.4.63 ।
11. पा. अ. 6.4.82 ।
12. पा. अ. 7.2.115 ।
13. पा. अ. 7.1.34 ।
14. पा. अ. 3.1.186 ।
15. पा. अ. 8.3.32 ।
16. पा. अ. 8.4.34 ।
17. पा. अ. 8.2.42 ।
18. पा. अ. 1.1.51 ।
19. प. शे. 13 ।
20. प. शे. 40 ।
21. पा. अ. 3.4.86 ।
22. पा. अ. 1.1.57 ।

**सन्दर्भग्रन्थाः**

1. वैयाकरणसिद्धान्तदिग्दर्शनम् - पं. बोधकुमारझाः ।
2. पाणिनीयाष्टाध्यायी - आचार्यपाणिनिः ।
3. वैयाकरणसिद्धान्तकौमुदी - पं. भट्टोजीदीक्षितः ।
4. लघुशब्देन्दुशेखरः - आचार्यनागेशः ।
5. परमलघुमञ्जूषा - आचायनागेशः ।
6. व्याकरणमहाभाष्यम् - आचार्यपतञ्जलिः ।
7. निबन्धपारिजातः - डॉ. रजनीकान्तः ।

8. परिभाषन्दुशेखरः हैमवतीव्याख्या ।
9. परिभाषेन्दुशेखरः दुर्गाव्याख्या - पं. हर्षनाथमिश्रः ।
10. प्रबन्धरत्नाकरः - डॉ. टमेशचन्द्रशुक्लः ।
11. परिभाषेन्दुशेखरः हिन्दीव्याख्या - आचार्यविश्वनाथमिश्रः ।
12. तर्कसंग्रहः - अन्नमभट्टः ।
13. महाभाष्यनिगूढाकूतयः - डॉ. देवस्वरूपमिश्रः ।
14. माधवीयधातुवृत्तिः - सायणाचार्यः ।
15. शब्दार्थमीमांसा - डॉ. गौरीनाथशास्त्री ।
16. वैयाकरणसिद्धान्तपंक्तिप्रकाशिका - डॉ. रमाकान्तपाण्डेयः ।
17. संस्कृतनिबन्धावलिः - पं. रामजी उपाध्यायः ।
18. सिद्धान्तकौमुदी ऐप् - आचार्यमदनमोहनझाः ।
19. संस्कृतव्याकरण ऐप् - स्वामीनारायणगुरुकुलम् ।
20. अमरकोष ऐप् - आचार्यमदनमोहनझाः ।
21. अष्टाध्यायी ऐप् - आचार्यमदनमोहनझाः ।

**संविदाध्यापकः ( व्याकरणविभागः )**
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
**क. जे. सोमैयापरिसरः**
**विद्याविहारः, मुम्बई ।**



# शब्दविमर्शः

✍डा. पुष्कर आनन्दः

**( नामरूपात्मके जगति सर्वोऽपि व्यवहारः शब्दायत्तः । स च शब्दो नित्योऽनित्यो वेति द्विधा सम्प्रदायः। तत्रापि ध्वन्यात्मको, वर्णात्मकः, स्फोटात्मको वा शब्द इति कश्चन महान् विचारः शास्त्रे तत्र तत्रोपलभ्यते । विशेषतो व्याकरणन्यायमीमांसादर्शने विषयोऽयं मुख्यतः प्रतिपादनीयतां लभते । प्रकृ-तनिबन्धे तदुक्तदर्शनानि सान्दर्भिकाणि विमृश्य प्रसङ्गतोऽलङ्कारशास्त्रीयं शब्दतत्त्वमपि विमृष्टम् ।)**

**विशिष्टशब्दाः-** शब्दोत्पत्तिः, शब्दस्वरूपम् , शब्दभेदाः ।

वाग्व्यवहारनिर्वर्त्तनाय स्वाभिधेयाभिधानाय च भाषैव मूर्धन्यभूतं साधनम् । परस्पराभिप्रायप्रकटनसाधनीभूतः शब्दसमूहः भाषेत्युच्यते । जगतीह यदि खलु शब्दज्योतिर्नाभविष्यत्तर्हि समग्रं भुवनत्रयमज्ञानान्धकारेण व्याप्स्यत् । यथा ह्याचार्यदण्डिनाऽपि प्रोक्तम् - **इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम्**

**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ।[१] का.द. 1.4**

यथा समस्तप्राणिभ्यः क्षितिजलपावकगगनसमीराणामावश्यकता अनुभूयते तथैवाधारभूतानां किं वा अव-यवभूतानां शब्दानामप्यनिवार्यताऽस्तीति नास्ति विसंवादः विपश्चिताम् ।

अथ तावत् कः शब्दः ? को ध्वनिः ? के च शब्दगुणा इति सर्वमत्र यथाशास्त्रं विचारयिष्यते । वस्तु-तस्तु व्याकरणन्यायमीमांसावेदान्तसाहित्यशास्त्रादिषु शब्दानामुत्पत्तिः तस्य स्वरूपं भेदाः व्यापाराश्च प्रसङ्गानुकूलं विचारिताः वर्तन्त एव, किन्तु तत्र विविधशास्त्रेषु विविधानि मतान्यपि दरीदृश्यन्ते। कैश्चित् शब्दस्याऽनित्यत्त्वं प्रत्यपादि कैश्चिच्च शब्दस्य नित्यत्वमवादि । कैश्चिच्छब्दशक्तयः द्विविधाः मन्यन्ते कैश्चिच्च त्रिविधाः शब्दशक्तयः स्वीक्रियन्ते ।

अस्त्वथेदानीं शाब्दिकानां शब्दविमर्शः विमृश्यते । तत्रादौ महाभाष्ये पस्पशाह्निके भगवता पतञ्जलिना "गौरित्यत्र कः शब्दः" इति प्रश्नमुद्भाव्य शब्दविषयिणी जिज्ञासा इत्थमुपशमिता - "येनोच्चारितेन सास्नालाङ्-गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः ।" अर्थात् येन स्फोटेनोच्चारितेन प्रकाशितेन सास्नादिमत्या गो-व्यक्तेर्ज्ञानं भवति स स्फोटः शब्दाभिधेयः । स च नाभिनवः परञ्च स्फोटशब्दः वक्तुरन्तस्थ एव शब्दः श्रोतु-र्हृदयमधिरोहति यथा हि वाक्यपदीयकृताभाणि -

**"नादैराहितबीजायामन्त्येन ध्वनिना सह**

**आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ।"[२]**

यथा हि वेदान्तिनः विश्वस्य समस्तपदार्थान् परब्रह्मरूपान् मन्यन्ते तथैव शाब्दिकैरपि शब्दतत्त्वम् अनादिनिधनं ब्रह्मैव स्वीक्रियते किञ्चानेन शब्दब्रह्मतत्त्वेनैव जगतः प्रक्रियाऽर्थभावेन प्रवर्तते यथा हि हरिणा प्रोक्तम् -

**"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**

**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।"** [३]

अपि च यथा हि वेदान्तिभिः समस्तपदार्थाः मायाकल्पितपदार्थरूपेण कल्प्यन्ते तथैव वैयाकरणाः समस्तवाङ्मयं व्यवहाराय कल्पयन्ति । एतदर्थं वाचः याः अवस्थाः परिकल्पिताः तासु आदौ आयाति परा वाक् । सर्वस्यास्य जगदादिभूतः सर्वाधिष्ठाता परमात्मरूप शिव एव । तदात्मभूता च संकोचप्रसरणशीला, परमशिवस्यैकरसत्वेऽपि सेयं परा शक्तिरेव तदाधारेण जगत्पटमिमं प्रसारयति संकोचयति च । ताविमौ परशिवपराशक्तिश्च प्रकाशविमर्शशब्दाभ्यां व्यवह्रियेते । अस्याः एव पराशक्तेः प्रथमोन्मेषौ बिन्दुनादौ वर्तेते । तत्र बिन्दुरेव त्रिगुणमव्यक्तमिति । अस्मात् बिन्दोः शब्दब्रह्मापरनामधेयमुत्पद्यते । एतद् जगदुपादानमेव "रव" "परा" आदिशब्दैर्व्यवह्रियते -

**"बिन्दोस्तस्मात् भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत् ।**

**स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते ॥"**

द्वितीया हि पश्यन्ती उच्यते । इयं हि वर्णक्रमाभ्यां शून्या अविभक्तरूपा नाभौ मणिपूरचक्रं संक्रमते । मनोगोचरीभूता च साधकानां सविकल्पकसमाधावेव यथा हि नागेशेनोक्तं - "अविभागा तु पश्यन्ती सर्वसंहृतक्रमेति" ।[4]

तदनु च बिन्दोरुत्पद्यमानः नाद एव मध्यमा वागिति उच्यते । इयं वाक् ज्ञानमयी स्थूलशब्दोपादानभूता क्रमविशिष्टा स्फोटपदाख्या चेति शाब्दिकैरनुभूयते । अत्र हि शब्दार्थौ विभागं लभेते । अत्र शब्दार्थयोः हृद्देशे वायुना संयोगः जायते, पूर्णप्रकटीकरणं न भवति अतः व्यक्ताव्यक्तायोर्मध्ये स्थितत्वात् मध्यमा वाक् उच्यते ।

अतः परं वैखरी वाक् प्रवर्तते । इयं वाक् कण्ठताल्वाद्यभिघातजन्या,वर्णात्मिका, परश्रवणगोचरा चेति प्रत्युच्चारणमनुभूयते । इयञ्च कण्ठस्थितं विशुद्धाख्यं चक्रमधितिष्ठति । तत्र मध्यमवाक्स्थितनाद एव वायुसंस्कारेण ऊर्ध्वमाक्रम्य मूर्द्धानमाहत्य परावृत्य च मुखमभिविशन् कण्ठताल्वाद्यभिघातैर्बहिर्निर्गच्छन् वैखरीरूपतां लभते । किञ्च आत्मना प्रेरितं मनःकायाग्निमाहत्य तद्द्वारा वायुं प्रेरयन् तदभिघातेन वर्णान् जनयतीति यथा हि प्रोक्तं -

**"प्राणापानान्तरे देवी वाग् वै नित्यं स्म तिष्ठति ।**

**स्थानेषु विवृते वायौ कृतवर्णपरिग्रहाः ।**

**वैखरीवाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धिनी ।** [५]

इत्थं शाब्दिकाः शब्दानां स्फोटरूपत्वं किञ्च तस्य नित्यत्वं प्रत्यपीपदन् ।

अतः परं नैयायिकानां शब्दविमर्शप्रसङ्गे मतमिदानीं प्रतुष्टूषामि । शब्दस्य गुणत्वमुत्पादकत्वं विनाशित्वमवधार्यमाणानां नैयायिकानां मतेन संयोगाद् विभागाच्च शब्दात् शब्दनिष्पत्तिर्भवतीति । स व्यक्ताव्यक्तसाधारणः ।

यथा वस्तुनः अभिघाताख्यात् संयोगात् पटत् पटदिति विभागाच्च वेणोः चटचटेति अव्यक्ताः शब्दाः प्रभवन्ति तथैव जिह्वाव्यापारेण ताल्वादिस्थानेषु वायोः संयोगाद् व्यक्ताः शब्दा अपि निष्पद्यन्ते । शब्दात् शब्दनिष्पत्तिस्तु शब्द-संतानद्वारा सिध्यति । यतः संयोगविभागाभ्यां यत्र शब्दानां जनिः तत्र शब्दसन्तानः क्रमशः तन्यते। यथा वीचिः वीच्यन्तरमुत्पादयति तथैव शब्दोऽपि शब्दान्तरमुद्भावयतीति सिद्धान्तः । स च शब्दः अनित्यः यथा हि न्यायसूत्रे प्रोक्तम् - **आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्चेति।**[6]

अथ साहित्यशास्त्रे आलङ्कारिकाणां शब्दविमर्श उपस्थाप्यतेऽधुना । अत्रापि बहुविधाः विचाराः दरीदृश्यन्ते । यत्र चन्द्रालोककारैः पीयूषवर्षजयदेवैः शब्दस्वरूपविवेचनपुरस्सरं शब्दस्य रूढयौगिकयोगरूढभेदाः विमृष्टाः तत्रैव मम्मटादिभिरन्यैराचार्यैः वाचकादयः शब्दाः वृत्तिविवेचनपुरस्सरं विवेचिताः । न त्वत्र शब्दस्योत्पत्तिविषयिणी चर्चा किञ्च शब्दस्वरूपमपि न तथा परिभाषितम् । अस्मिन्सन्दर्भे आलङ्कारिकाः शाब्दिकानेव प्रायशाऽनुसरन्ति । यथा ह्याचार्यमम्मटस्याभिमतमवलोक्यानुभूयते - "बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः ।"[7] यतो हि भाष्यकृता पस्पशायाम् "अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द'' इत्युच्यते इत्यपि मतं पुरस्कृतम् ।

व्याकरणशास्त्रमनुसृत्य एव आचार्यमम्मटः शब्दस्वरूपं तद्भेदाँश्च पराम्राक्षीत् । तत्र शब्दाः त्रिविधाः ते हि वाचकलाक्षणिकव्यञ्जकश्चेति - "स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा"।[8]

वाचकादीनां स्वरूपं स्पष्टयन् आचार्यमम्मटो ब्रूते- "साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः" वृत्तौ च लिखति - "इहागृहीतसंकेतस्य शब्दस्यार्थप्रतीतेरभावात् संकेतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राऽव्यवधानेन संकेतो गृह्यते स तस्य वाचकः । "[9]

आशयोऽस्ति व्यवधानं विना यस्य शब्दस्य उच्चारणेन यस्यार्थस्य साक्षात्संकेतग्रहणं भवतीति स शब्दः वाचकः उच्यते । शब्दस्यास्य व्यापारः अभिधेति कथ्यते - "स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ।"[10]

अत्र वाचकशब्दस्य परिभाषायां यः "संकेतितशब्दः" प्रयुक्तो वर्तते तेन शब्देन इदमभिप्रैति यद् व्यक्तेरुपाधिष्वेव संकेतो गृह्यते न तु व्यक्तौ आनन्त्यदोषात् । अत्राप्याचार्येण महाभाष्यकारः उद्धृतः- "गौः शुक्लश्चलो डित्थ" इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिरिति महाभाष्यकारः । संकेतग्रहणं कथं भवतीति प्रश्ने सति उच्यते -

**"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च**
**वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।"**

लाक्षणिकशब्दस्य विवेचनं परिभाषा च न तथा विस्तरेण निगदितं तत्र केवलं "तद्भूर्लाक्षणिकः" इत्युक्त्वा एव विरमति अर्थात् लक्षणायाः भूमिः लाक्षणिकशब्दाः वर्तन्तं । पुनश्च व्यञ्जकशब्दस्यापि वाचकशब्दवत् न तथा स्पष्टा परिभाषा कृता वर्तते तथापि येन शब्देन व्यङ्ग्यार्थः अभिव्यज्यते स शब्दः व्यञ्जकशब्द

इति वक्तुं शक्नुमः । आलङ्कारिकेषु चन्द्रालोककारैः पीयूषवर्षजयदेवैः किञ्चित्पृथक् विशिष्टं स्फुटं स्वरूप-मभिव्यक्तम् तद्यथा – **विभक्त्युत्पत्तये योग्यः शास्त्रीयः शब्द इष्यते**

**रूढयौगिकतन्मिश्रैः प्रभेदैः स पुनस्त्रिधा।** [११]

सुप्तिङन्तानामुत्पत्तये अर्हताप्राप्तः व्याकरणशास्त्रनिष्पन्नः शब्दः इष्यते इति भावः। पुनश्च स्वरूपं निरूप्य भेदान् निर्दिशन् रूढयौगिकयोगरूढशब्दान् स्पष्टयति–

**"अव्यक्तयोगनिर्योगयोगाभासैस्त्रिधादिमः**

**ते च वृक्षादिभूवादिमण्डपाद्या यथाक्रमम् ।"** [१२]

अत्र अव्यक्तयोगो रूढः यथा हि वृक्षः । पुनश्च निर्योगरूढः भूवादयः । ततश्च योगाभासः मण्डपः । यौगिकं स्पष्टयन् ब्रूते– **"शुद्धतन्मूलसंभिन्नप्रभेदैः यौगिकस्त्रिधा**

**ते च भ्रान्तिस्फुरत्कान्तिकौन्तेयादिस्वरूपिणः ।"** [१३]

तत्र शुद्धेति भ्रान्त्यादिशब्दः। यौगिकमूलस्तु स्फुरत्कान्तिः। सम्भिन्नेति कौन्तेयः।

इत्थमेव योगरूढस्य लक्षणमनेन प्रत्यपादि –

**"तन्मिश्रोऽन्योन्यसामान्यविशेषपरिवर्तनात्**

**नीरधिः पङ्कजं सौधः सागरो भूरुहः शशी ।"** [१४]

एवं प्रकारेण योगरूढशब्दाः अपि सोदाहरणं विवेचिताः ।

साहित्यशास्त्रे शब्दस्योत्पत्तिः किञ्च तस्य स्वरूपं नाधिकमन्यैराचार्यैः स्पष्टीकृतं परञ्च अभिधालक्षणा-व्यञ्जनारूपाः शब्दवृत्तयः विशदेन व्याख्यायिषत ।

पण्डितराजजगन्नाथेनापि केवलं "रमणीयार्थप्रतिपादकः शब्दः काव्यम्"[15] इत्युक्त्वा शब्दस्य रमणीयत्वं प्रतिपादितम् न तु तेनापि वाचकलक्षकव्यञ्जकादिशब्दानां पृथक् पृथक् स्वरूपं प्रादर्शि ।

अत एव शब्दस्वरूपं तस्योत्पत्तिं तद्भेदाँश्चावगन्तुमस्माभिः न्यायमीमांसावेदान्तसाहित्यशास्त्रादीनां विविध-मतमवगम्य महाभाष्यवाक्यपदीयादिव्याकरणग्रन्थानामवगाहनं कर्तव्यम् । यतो हि सर्वाणि शास्त्राणि स्वस्वमतानुसारं शब्दस्य स्वरूपं तस्योत्पत्तिं विवृण्वन्त्येव । इति शम् ।

## सन्दर्भाः


1. काव्यादर्शः 1.4 ।
2. वाक्यपदीयम् 1.85 ।
3. वाक्यपदीयम् 1.1 ।

4. लघुमञ्जूषा शब्दशक्तिनिरूपणम् ।
5. लघुमञ्जूषा शब्दशक्तिनिरूपणम् ।
6. न्यायसूत्रम् 2.2.13 ।
7. काव्यप्रकाशः - प्रथमोल्लासः ।
8. काव्यप्रकाशः - द्वितीयोल्लासः ।
9. काव्यप्रकाशः - द्वितीयोल्लासः ।
10. काव्यप्रकाशः - द्वितीयोल्लासः ।
11. चन्द्रालोकः - प्रथमो मयूखः ।
12. चन्द्रालोकः - प्रथमो मयूखः ।
13. चन्द्रालोकः - प्रथमो मयूखः ।
14. चन्द्रालोकः - प्रथमो मयूखः ।
15. रसगंगाधर - प्रथमाननम् ।

**सहायकाचार्यः, साहित्य विभागः**
**श्रीरामसुन्दर संस्कृत विश्व विद्या प्रतिष्ठान**
**रमौली, दरभंगा (बिहार)**



# महाभाष्ये नवाह्निकेषु प्रतिपादितसिद्धान्ताः

✍डॉ. सत्यराज रेग्मी

**(उत्तरोत्तरमुनौ पूर्वपूर्वमुनीनां तात्पर्य्यं निहितमिति रीत्या 'यथोत्तरं मुनीनां प्रामाण्यमि'ति सुप्रथितम् । शब्दशास्त्रे तदनुसारं भगवतः पतञ्जलेः प्रामाण्यमभ्युपगम्य प्रवर्त्तन्ते शाब्दिकाः । भाष्येषु महत्त्वातिशयं पा-तञ्जले, तस्माद् महाभाष्यमिति ख्यातिङ्गतस्याऽऽकरग्रन्थस्यास्य नवाह्निकं सर्वत्र पठनपाठने विनियुज्यते । तत्र ये सिद्धान्ता मुख्यत्वेन निरूपिताः, तेषां सङ्कलनमत्रैकत्र निबन्धे कृतम् । सूच्यात्मकेन निबन्धेनानेन तेषां तेषां सिद्धान्तानां कुत्र कुत्र निरूपणमित्यवगम्यते ।)**

संस्कृतव्याकरणशास्त्रस्य वाङ्मयाध्ययनेन परिज्ञायते यत् ऐन्द्र-चान्द्र-काशकृत्स्नाऽऽपिशल्यादिष् प्रामुख्यं भाजमानेषु व्याकरणेषु रत्नायमानं साङ्गोपाङ्गं पाणिनीयमेव व्याकरणशास्त्रं लोके साम्प्रतं समुपलभ्यते । निखिलभुवने समग्रस्यापि संस्कृतसाहित्यस्य अनुपमरत्नमिदं व्याकरणमित्यत्र नास्ति सन्देहलेशोऽपि । प्राक्तनेषु शब्दशास्त्रेषु कृत्स्नस्य शब्दजातस्य व्युत्पत्तिसामर्थ्यमवलोक्य महर्षिपाणिनिः लौकिकालौकिकशब्दनिबन्धनार्थं महेश्वरप्रसादलब्धौजसा अष्टाध्यायीग्रन्थं विरचयामास ।

अष्टाध्यायीसूत्राणि, तदुपकारकाणि वररुचिकृतवार्त्तिकानि, सूत्रवार्त्तिकयोः समन्वयरूपं महर्षिपतञ्जलेः महाभाष्यम्, अमूनां त्रयाणामपि समग्रसिद्धान्तानां समवायरूपं भवति पाणिनीयव्याकरणम् इति । तदेव त्रिमुनि-व्याकरणमिति कथ्यते । पाणिनि-कात्यायन-पतञ्जलिषु अन्तिम आचार्यः शेषावतारः पतञ्जलिः वर्तते । अष्टा-ध्यायीग्रन्थाधारीकृतग्रन्थेषु महर्षिपतञ्जलिना कृतं महाभाष्यं समस्तस्य व्याकरण- शास्त्रस्य आधारभूतं मूर्धाभिषिक्तं सहस्ररश्मिसमवेतं सविता इव जगत्यस्मिन् विद्योतते । वस्तुतो महाभाष्यमेव शब्दशास्त्रस्य प्रमाणभूतं ग्रन्थं मन्वते सर्वेऽपि वैयाकरणाः । अत एव ते 'यथोत्तरं मुनीनां प्रामाण्यम्' इति स्वीकुर्वन्ति ।

प्रसिद्धिं गतस्य पाणिनोयव्याकरणशास्त्रस्य महर्षिपतञ्जलिना 'अथ शब्दानुशासनम्'[१] इत्यत आरभ्य 'अ अ'[२] इत्यन्तं कृतव्याख्यानं महाभाष्यमिति । अत्र महाभाष्ये नवाह्निकेषु प्रतिपादिताः सिद्धान्ताः प्रस्तूयन्ते, येन अध्येतॄणां विषयपरिचयः विदुषां वैयाकरणानां च स्मृतौ विषयस्फुरणं नूनमेव भविष्यति ।

**नवाह्निकम् इति पदस्याभिप्रायः** - नवभिः अहोभिः निर्वृत्तम् निष्पादितम् इति विग्रहे 'तेन निर्वृत्तम्'[३] इति सूत्रेण ठञ्प्रत्यये कृते नवाह्निकम् इति पदं सिद्ध्यति । अनया व्युत्पत्त्या ज्ञायते यत् महर्षिपतञ्जलिना सूत्राष्टाध्याय्याः प्रथमाध्यायस्य प्रथमपादस्य भाष्यं नवभिर्दिनैः निर्मितम् । प्रतिदिनं यद्भाष्यं महर्षिणा क्रियते स्म तस्य आह्निकमिति विशिष्टा संज्ञा तेन विहितास्ति । तदनुरीत्या प्रथमेऽहनि यद् भाष्यं लिखितं तस्य प्रथमाह्निकम्, द्वितीयेऽहनि यद् यद्भाष्यं कृतं तस्य द्वितीयाह्निकम्, तृतीयेऽहनि यद् भाष्यं लिखितं तस्य तृतीयाह्निकम् इत्यादि-क्रमेण नवभिर्दिनैः प्रथमाध्यायस्य प्रथमपादस्य भाष्यनिर्मितत्वात् नवाह्निकमिति व्यवहारः ।

**पस्पशाह्निकम् नाम प्रथमाह्निकम्** - नवाह्निके महाभाष्ये प्रथमाह्निकस्य नाम पस्पशाह्निकमिति व्यवहारः। स्पश बाधनस्पर्शयोः इत्यस्माद् भ्वादिगणपठिताद्धातोः पौनःपुन्येन अतिशयेन वा स्पशतीति पास्पश्यते, यङ्लुकि पास्पष्टि यङ्लुङन्तात् अचि कृते 'संज्ञापूर्वको विधिरनित्यः'इति नियमाद् अभ्यासदीर्घो न भवति, तस्मात् अकारान्तात् पस्पशशब्दात् स्त्रीत्वविवक्षायां टाप्प्रत्यये कृते 'पस्पशा' इति शब्दो निष्पद्यते । अतिशयेन कस्यापि ज्ञानस्य पदार्थस्य वा ग्रन्थनम् इति पस्पशाशब्दस्यार्थो बोध्यः । पस्पशापदार्थो नाम उपोद्घातः प्रस्तावना वा इत्यपि भवितुमर्हति । महर्षिपतञ्जलिना पाणिनिकृतसूत्राष्टाध्याय्याः व्याख्यानावसरे सर्वादौ 'अथ शब्दानुशासनम्' इति वाक्यं व्याख्यायता करिष्यमाणस्य सम्पूर्णस्य महाभाष्यस्य प्रास्ताविकरूपेण व्याकरणशास्त्रस्य सर्वोऽपि विषयः अत्यन्तसूक्ष्मतया पस्पशाह्निके सन्निवेशितः । पस्पशायाः आह्निकम् पस्पशाह्निकम् इति अस्मिन् पदे षष्ठी-तत्पुरुषसमासो बोध्यः ।

**प्रथमाह्निके प्रतिपादितसिद्धान्ताः** - पस्पशाह्निके महर्षिपतञ्जलिना सर्वपथमं यद् वाक्यं व्याख्यातम्, तच्च - 'अथ शब्दानुशासनम्' इति । अस्य वाक्यस्याधारेण प्रथमाह्निके सिद्धान्ताः प्रतिपादिताः वर्तन्ते । ते च सिद्धान्ताः भवन्ति - १.व्याकरणशास्त्रस्य साक्षात् प्रयोजनम् । २.को नाम शब्दः ? इति सिद्धान्तप्रतिपादनम् । ३. शब्दानुशासनस्य मुख्यप्रयोजनविवेचनम् । ४.शब्दानुशासनस्य आनुषङ्गिकप्रयोजनविवेचनम् । ५.शब्दानुशासन-प्रयोजनानां ग्रन्थोपपत्तिविचारः । ६.अनुबन्धचतुष्टयोपसंहारादिविचारः । ७. शास्त्रनिर्माणपद्धतिः । ८.जातिव्यक्ति-पदार्थनिर्णयः । ९.शब्दनित्यत्वानित्यत्वनिर्णयः । १०.नित्यशब्दवादे शास्त्रधर्मजनकताविवेचनम् । ११.सिद्ध-शब्दार्थविवेचनम् । १२.नित्यतासाधकपक्षविचारः। १३.द्रव्यपदार्थाभ्युपगमविचारः । १४.आकृतिपदार्थाभ्युपगमविचारः। १५.नित्यत्वानत्यत्वविवेचनम् । १६.व्याकरणशास्त्रस्य धर्मनियमसिद्धान्तप्रतिपादनम् । १७.अप्रयुक्तशब्दविवेचनम् । १८.शब्दज्ञानस्य धर्मजनकताविवेचनम् । १९.शब्दप्रयोगे धर्मजनकताविचारः । २०.व्याकरणपदार्थनिरूपणम् । २१. वर्णोपदेशविचारः ।

**द्वितीयाह्निके प्रतिपादितसिद्धान्ताः** - महाभाष्ये द्वितीयाह्निके 'अ इ उण्'[४] इत्यादिप्रत्याहारसूत्राणां विवेचनत्वाद् अस्य आह्निकस्य कृते 'प्रत्याहाराह्निकम्' इति व्यवहारो भवति । अत्र प्रत्याहाराह्निके चतुर्दश-माहेश्वरसूत्रेषु 'अ इ उण्' इत्यत आरभ्य 'झ भञ्'[५] इत्यन्तं अष्टौ सूत्राणि महाभाष्यकारेण व्याख्यातानि सन्ति । एतेषु प्रत्याहारसूत्रेषु वर्णिताः सिद्धान्ताः क्रमशोऽत्र स्मर्यन्ते -

'अइउण्'[६] इत्यस्मिन्सूत्रे - १.अकारस्य विवृतोपदेशविवेचनम् । २.धात्वादिषु विकृतत्वविवेचनम् । ३.व-र्णसमाम्नाये जातिपक्षसिद्धान्तप्रतिपादनम् । ४.वर्णसमाम्नाये व्यक्तिपक्षसिद्धान्तप्रतिपादनम् । ५.जातिव्यक्त्योः जाति-पक्षसमाधानविनिर्णयः । 'ऋऌक्'[७] इत्यत्र - १.ऌकारोपदेशप्रयोजनविमर्शः । २.यदृच्छाऽक्षक्तिजशब्दविवेचनम् । ३. ऌकारोपदेशप्रत्याख्यानम् । 'एओङ्'[८] 'ऐऔच्'[९] इत्यनयोः सन्दर्भे - १.अतपरत्वव्यवस्थाविवेचनम् । २.वर्णग्रहणे

वर्णैकदेशग्रहणविचारः । 'हयवरट्'[१०] सूत्रेऽस्मिन् - १.हकारोपदेशविमर्शः । २.रकारोपदेशस्य यकारवकारपूर्वापरोपदेशविचारः । ३.अयोगवाहोपदेशविवेचनम् । ४.वर्णानामर्थवत्त्वम् अनर्थवत्त्वं वेति विविच्य धातुप्रातिपदिकप्रत्ययनिपातस्थवर्णानामर्थवत्त्वसाधनम् । ५.प्रत्याहारस्थानुबन्धकवर्णानां ग्रहणविचारः । ६."अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रेऽण्ग्रहणप्रयोजनम्। 'लण्'[११] इत्यस्मन् सूत्रे - १.णकारस्य द्विधाऽनुबन्धविचारः । २.'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति परिभाषाज्ञापकताविमर्शः । 'ञमङणनम्'[१२] 'झभञ्'[१३] इत्यत्र - १.सूत्रैक्यसाधनविचारः । अक्षरनिर्वचनसिद्धान्तप्रतिपदनम् । ३.अक्षरसमाम्नायं विविच्य तदध्ययनेन स्वर्गादिफलप्राप्तिकथनम् ।

**तृतीयाह्निके प्रतिपादितसिद्धान्ताः** - महर्षिपतञ्जलिना महाभाष्ये तृतीयाह्निके पाणिनिसूत्राष्टाध्यायीस्थं "वृद्धिरादैच्"[१४], "इको गुणवृद्धो"[१५] इति सूत्रद्वयं व्याख्यातम् । मध्यस्थस्य "अदेङ्गुणः"[१६] इति सूत्रभाष्यं न प्राप्यते, तद् विनष्टमिति अनुमीयते ।

अत्र तृतीयाह्निके महाष्यकारेण विशेषेण - १."वृद्धिरादैच्" इति सूत्रे कुत्वविचारः । २.तद्भाविताऽतद्भावितादैचां संज्ञाविवेचनम् । ३.वद्धिशब्दस्य माङ्गलिकत्वविचारः । ४.संज्ञायां प्राप्तस्य इतरेतराश्रयदोषविवेचनम्। ५.प्रत्येकं शब्दं विनापि आ, ऐ, औ, वर्णानां प्रत्येकं वृद्धिसंज्ञाविवेचनम् । ६.'आदैच्' इत्यत्र तपरकरणविमर्शः । ७."इको गुणवृद्धी" इत्यस्मिन् सूत्रे इग्ग्रहणप्रयोजनसिद्धान्तः । ८."इको गुणवृद्धी" सूत्रसार्थकताविमर्शः । ९.इक्परिभाषोपस्थितिविचारः । १०.इक्परिभाषायाः स्वातन्त्र्यविवेचनम् । ११."इको गुणवृद्धी" इत्यस्मिन् सूत्रे वृद्धिग्रहणप्रयोजनविचारः । १२.इक्परिभाषायाः स्वतन्त्रविधित्वमवमत्य विधिशेषभूतसाधनविवेचनम्, इत्यादयो द्वादश सिद्धान्ताः प्राधान्येन व्याख्याताः ।

**चतुर्थाह्निके प्रतिपादितसिन्द्धान्ताः** - महाभाष्यकारेण महाभाष्यस्य चतुर्थाह्निके "न धातुलोप आर्धधातुके"[१७], "क्ङिति च"[१८] "दीधीवेवीटाम्"[१९], "हलोऽनन्तराः संयोगः"[२०], "मुखनासिकावचनोऽनुनासिकः"[२१], "तुल्यास्यप्रयत्नं सवर्णम्"[२२], "नाऽऽज्झलौ"[२३] इति सप्तसूत्राणां व्याख्यानं विहितमस्ति ।

तत्र "न धातुलोप आर्धधातुके" इत्यस्मिन्सूत्रे - १.आर्धधातुकपदस्य गुणवृद्ध्योः विशेषणविवेचनम् । २.सूत्रस्य इष्टविषयपरिगणनं कृत्वा इग्लक्षण गुणवृद्धिनिषेधं विवेचयन् परिगणनं प्रत्याचख्यौ भाष्यकारः । ३.स्थानिवद्भावादिष्टसिद्धौ सूत्रमेव प्रत्याख्यतम् । "क्ङिति च" इत्यत्र - १.तन्निमत्तग्रहणविमर्शः । २.इग्लक्षणगुणवृद्धिनिषेधविमर्शः । ३. स्थानिवद्भावविवेचनम् । "दीधीवेवीटाम्" अस्मिन् सूत्रे - १.अस्य प्रयोजनमुद्भाव्य तत्प्रत्याख्यानञ्च भगवता कृतम् । "हलोऽनन्तराः संयोगः" अत्र - १.सूत्रे अन्तरपदार्थविवेचनम् । २.प्रत्येकं संयोगसंज्ञाविवेचनम् । ३.द्विहल्संयोगसंज्ञाविवेचनम् । ४.समुदायसंज्ञाविवेचनम् । ५. भिन्नजातीयव्यवधायकसिद्धान्तः। ६.ग्रामपदार्थविचारः । "मुखनासिकावचनोऽनुनासिकः" इति सूत्रे - १.मुखनासिकावचनपदार्थविचारः । २.मुखनासिकाग्रहणप्रयोजनविचारः । ३.मुखग्रहणखण्डनविवेचनम् । ४.इतरेतराश्रयदोषविवेचनम् । "तुल्यास्यप्रयत्नं सव-

र्णम्" इत्यत्र - १.सूत्रार्थविचारः । २.स्थानप्रयत्नविवेचनम् । ३.सवर्णसंज्ञाविवेचनम् । ४.ऋकारलृकारसव- र्णसंज्ञाविवेचनम् । "नाऽऽज्झलौ" इत्यस्मिन्सूत्रेख्र १.अज्ग्रहणसिद्धान्तविमर्शः । २.ऊष्मस्वरसवर्णसंज्ञानिषेधविवेचनम्, इत्यादयो सिद्धान्ताः प्रतिपादिताः सन्ति ।

**पञ्चमाह्निके प्रतिपादितसिद्धान्ताः** - पञ्चमाह्निके "ईदूदेद् द्विवचनं प्रगृह्यम्"[२४] इत्यतः "क्तक्तवतू निष्ठा"[२५] इत्यन्तं पञ्चदश सूत्राणि भाष्यकारेण व्याख्यातानि । तत्र मध्ये "सम्बुद्धौ शाकल्यस्येतावनार्षे"[२६] इत्येकं सूत्रं न व्याख्यातम्, तद्विनष्टमित्यनुमीयते ।

"ईदूदेद् द्विवचनं प्रगृह्यम्" इत्यस्मिन् सूत्रे - १.तपरसंज्ञाविवेचनम् । २.द्विवचनविशेषणताविमर्शः । "अदसो मात्"[२७] अस्मिन् सूत्रे - १.मूत्वमीत्वयोरसिद्धत्वविवेचनम् । "शे"[२८] इत्यस्मिन्सूत्रे - १.'शे' शब्दे अ- निष्टापत्तिसिद्धान्तविमर्शः । "निपात एकाजनाङ्"[२९] इति सूत्रे - १.पदकृत्यविवेचनम् । "ओत्"[३०] इत्यस्मिन् सूत्रे- १.सूत्रवैयर्थ्यनिराकरणविमर्शः । "उञः"[३१] "ऊँ"[३२] इत्यनयोः - १.अनिष्टापत्ति-निवारणविवेचनम् । "ईदतौ च सप्तम्यर्थे"[३३] अत्र - १.अर्थग्रहणप्रयोजनविमर्शः । "दाधाघ्वदाप्"[३४] अत्र- १.इष्टानुपपत्तिनिवारणविवेचनम् । २. यदागमन्यायविवेचनम् । ३.सन्निपातन्याविवेचनम् । ४.नानुबन्धकृतमनेजन्तत्वविवेचनम् । "आद्यन्तवदेकस्मिन्"[३५] इत्यस्मिन् सूत्रे - १. सूत्रप्रयोजनविचारः । "तरप्तमपौ घः"[३६] इति सूत्रे - १.तरशब्दस्य घुसंज्ञाप्राप्तिदोषविवेचनम् । "बहुगणवतुडतिसङ्ख्या"[३७] अस्मिन् सूत्रे - १.सङ्ख्यासंज्ञाविवेचनम् । "ष्णान्ता षट्"[३८] अत्र - १.इष्टानुपपत्य- निष्टापत्तिनिराकरणसिद्धान्तविमर्शः । "डति च"[३९] इत्यस्मिन् सूत्रे - १.सूत्रप्रत्याख्यानविमर्शः । "क्तक्तवतू निष्ठा"[४०] इत्यस्मिन् सूत्रे - १.अनिष्टापत्तिनिराकरणसिद्धान्तः, इत्यादिविषयाः पञ्चमाह्निके सिद्धान्तिताः वर्तन्ते ।

**षष्ठाह्निके प्रतिपादितसिन्द्धान्ताः** - अस्मिन् आह्निके भाष्यकृता "सर्वादीनि सर्वनामानि"[४१] इत्यस्मात् सूत्रादारभ्य "न वेति विभाषा"[४२] इत्यन्तानि पञ्चदश सूत्राणि व्याख्यातानि । मध्यस्थानां "द्वन्द्वे च"[४३] "प्रथम- चरमतयाल्पार्धकतिपयनेमाश्च"[४४] "क्त्वातो सुन्कसुनः"[४५] एतेषां त्रयाणां सूत्राणां भाष्यं नैव लभ्यते, तल्लुप्तमति विज्ञायते ।

"सर्वादीनि सर्वनामानि" इत्यत्र - १.सर्वादिशब्दे तद्गुणसंविज्ञानबहुव्रीहिं मत्वा सर्वशब्दस्य सर्वनाम- संज्ञासाधानम् । २.'सर्वनाम' इति शब्दे निपातनाण्णत्वाभावं प्रतिपाद्य 'बाधकान्येव निपातनानि' इति परिभाषो- द्धारविवेचनम् । ३.'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकस्य प्रयोजनखण्डनविवेचनम् । ४.उभयशब्दपाठप्रयोजनविमर्शः। ५.भवच्छब्दपाठप्रयोजनविमर्शः । "विभाषा दिक्समासे बहुव्रीहौ"[४६] "न बहु- व्रीहौ"[४७] अत्र - १.सूत्रप्रयोजन- विवेचनं तत्प्रत्याख्यानञ्च । "तृतीया समासे"[४८] सूत्रेऽस्मिन् - १.पुनः समासग्रहणविमर्शः । "विभाषा जसि"[४९] अस्मिन् सूत्रे - १.अर्थव्याख्यानविवेचनम् । "पूर्वापरावरदक्षिणो- त्तरापराधराणि व्यवस्थायामसंज्ञायाम्"[५०] सूत्रेऽस्मिन् - १.गणसूत्रपाठयोः कालनिर्णयविवेचनम् । "स्वमज्ञातिधनाख्यायाम्"[५१] इत्यत्र - १.आख्याप्रयोजनसिद्धान्तविमर्शः ।

"अन्तरं बहिर्योगोपसंव्यानयो:"[५२] सूत्रे – १.उपसंव्यानग्रहणप्रयोजनविमर्शः । "स्वरादिनिपातमव्ययम्"[५३] इत्यत्र – १. उभयसंज्ञाप्रयोजनविचार: । "तद्धितश्चासर्वविभक्तिः"[५४] अत्र – १.इष्टानुपपत्तिपरिहारविवेचनम् । "कृन्मेजन्तः"[५५] इति– १. सूत्रार्थे पदान्वयविचारविमर्शः । "अव्ययीभावश्च"[५६] इत्यत्र – १.सूत्रप्रयोजनप्रत्याख्यानविवेचनम् । "शि सर्वनामस्थानम्"[५७] "सुडनपुंसकस्य"[५८] अत्र – १.अनपुंसकस्येत्यत्र प्रसज्यप्रतिषेधविमर्शः । "न वेति विभाषा" इत्यत्र – १.अर्थसंज्ञाविवेचनम् । २.विध्यनित्यत्वसाधनविचारः। ३.सूत्रप्रत्याख्यानविचार: । ४.अप्राप्तविभाषाविवेचनम्। ५.प्राप्तविभाषाविवेचनम् । ६.उभयत्रविभाषाविवेचनम्, इत्यादय: सिद्धान्ताः षष्ठाह्निके व्याख्याताः वर्तन्ते ।

**सप्तमाह्निके प्रतिपादितसिद्धान्ताः** – व्याकरणमहाभाष्ये सप्तमाह्निके "इग्यणः सम्प्रसारणम्"[५९] इत्यतः "अनेकाल्शित्सर्वस्य"[६०] इति यावत् एकादश सूत्राणि व्याख्यातानि सन्ति । तत्र "इग्यणः सम्प्रसारणम्" इत्यस्मिन् सूत्रे – १.वाक्यवर्णयोः संज्ञाविवेचनम् । "आद्यन्तौ टकितौ"[६१] "इग्यणः सम्प्रसारणम्" इत्यत्र – १.अन्वयानुपपत्तिविमर्शः । २.टकितोः आगमविषयत्वनिर्णयः । "मदचोऽन्त्यात्परः"[६२] "इग्यणः सम्प्रसारणम्" इत्यत्र – १.सूत्रप्रयोजनसिद्धान्तः । २.पूर्वान्तत्वपरादित्वविचार: । "एच इग्घ्रस्वादेशे"[६३] इति सूत्रे – १.सूत्रप्रयोजनं तत्प्रत्याख्यानञ्च। "षष्ठी स्थानेयोगा"[६४] इत्यत्र – १.स्थानयोगाशब्दार्थविवेचनम् । २.सूत्रप्रयोजनप्रत्याख्यानविमर्शः । ३. निर्दश्यमानपरिभाषाविवेचनम् । "स्थानेऽन्तरतमः"[६५] अस्मिन् सूत्रे – १.स्थानग्रहणसिद्धान्तविचारः । २.अन्तरतम इत्यस्य प्रथमान्तत्वविवेचनम् । ३.सूत्रप्रत्याख्यानविवेचनम् । "उरण् रपरः"[६६] इति सूत्रस्य – १.स्वतन्त्रविधायकत्वखण्डनम्। २.अण्ग्रहणविमर्शः । ३.रपरे पूर्वान्तपराद्यभक्तविवेचनम् । "अलोऽन्त्यस्य"[६७] सूत्रेऽस्मिन् – १. अल्ग्रहणविशेषणताविमर्शः । "ङिच्च"[६८] इत्यत्र – १. तातङि सर्वादेशत्वसाधनसिद्धान्तः । "आदेः परस्य"[६९] इति सूत्रे – १. आदिनियमतः सर्वादेशबलीयस्त्वविवेचनम् । "अनेकाल्शित्सर्वस्य" अस्मिन् सूत्रे – १.शिद्गहणप्रयोजनप्रत्याख्यानम्। २. 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषाज्ञापनविवेचनम्, इत्यादिसिद्धान्ताः महाभाष्यकृता सप्तमाह्निके विमर्शिताः वर्तन्ते ।

**अष्टमाह्निके प्रतिपादितसिद्धान्ताः** – महर्षिपतञ्जलिकृते महाभाष्ये अष्टमाह्निके "स्थानिवदादेशोऽनल्विधौ"[७०] इत्यारभ्य "द्विर्वचनेऽचि"[७१] इति सूत्रपर्यन्तं चत्वारि सूत्राणि व्याख्यातानि । अत्र प्रतिपादिताः सिद्धान्ताः सूत्रसहिताः स्मर्यन्ते, तद्यथा –

"स्थानिवदादेशोऽनल्विधौ"इत्यस्मिन् सूत्रे – १.पदकृत्यं व्याख्याय तत्प्रयोजनकथनम् । २.शास्त्रीयज्ञापकैः सूत्रखण्डनं कृत्वा सूत्रसत्तायाम् अनल्विधिग्रहणप्रयोजनकथनम् । ३.सामान्यातिदेशे विशेषानतिदेशः इति परिभाषाविमर्शः । ४.स्थानिवद्भावविमर्शः । ५.'एकदेशविकृतमनन्यवद्' इति परिभाषाविवेचनम् । ६.स्थानिवद्भावस्य बुद्धिविपरिणामत्वविवेचनम् । ७.स्थानिवत्सूत्रस्य दोषोद्धारविमर्शः। "अचः परस्मिन् पूर्वविधौ"[७२] इत्यत्र – १. विधिग्रहणप्रयोजनसिद्धान्तः । २.पूर्वविधिशब्दे समासप्रदर्शनम् । ३.अपरविधौ स्वविधौ वा स्थानिवद्भावान्यथा–

सिद्धिविचारः । ४.विधिशब्दस्य भवकर्मसाधनविवेकः । ५.असिद्धम्बहिरङ्गपरिभाषासिद्धिविचारः । ६. पूर्वविधि-विमर्शः । ७.स्थानिवद्भावे भावातिदेशविमर्शः । ८.पूर्वमात्रविधौ स्थानिवद्भावविचारः । ९.हलचोः स्थान्यादेशे स्थानिवद्भावविचारः । १०.शास्त्रीयाशास्त्रीयकार्ययोः स्थानिवद्भावविमर्शः । "न पदान्तद्विर्वचनवरेयलोपस्वर-सवर्णानुस्वारदीर्घजश्चर्विधिषु"[७३] इत्यस्मिन् सूत्रे - १.पदान्तविधौ विधिशब्दस्य भावसाधनतायाः तथा कर्मसाधन-तायाः गुणदोषसिद्धान्तविचारः । २.वरेयलोपवधौ स्थानिवद्भावनिषेधविचारः । ३.स्वरदीर्घयलोपविधिषु अजा-देशस्थानिवद्भावविचारः । ४.'पूर्वत्रासिद्धे न स्थानिवत्' इति वार्त्तिकविमर्शः। "द्विर्वचनेऽचि"इति सूत्रे - १.रूपाति-देशविवेचनम् । २.द्विर्वचनशब्दव्युत्पत्तिविवेचनम् । ३.द्वित्वनिमित्तं मत्वा स्थानिवद्भावविचारः । ४.सूत्रप्रयोजनवमर्शः, इत्येवम्प्रकारकाः विषयाः अष्टमाह्निके विवेचिताः ।

**नवमाह्निके प्रतिपादितसिद्धान्ताः** - अस्मिन् नवमाह्निके "अदर्शनं लोपः"[७४] इत्यस्मात् सूत्रात् प्रथ-माध्यायस्य प्रथमपादान्तं यावत् पञ्चदश सूत्राणि व्याख्यातानि । मध्ये "अचोऽन्त्यादि टि"[७५] इत्येकस्य सूत्रभाष्यं नैवोपलभ्यते । तत्प्रायः विनष्टमिति मन्यते । व्याख्यातसूत्रेषु प्रतिपादितसिद्धान्ताः इत्थम्प्रकारकाः वर्तन्ते -

"अदर्शनं लोपः"इत्यस्मिन् सूत्रे - १.लोपसंज्ञायामितरेतराश्रयदोषसमाधानम् । "प्रत्ययस्य लुक्श्लु-लुपः"[७६] इत्यत्र - १.प्रथमप्रत्ययग्रहणस्य प्रत्याख्यानम् । २.द्वितीयप्रत्ययग्रहणस्यावश्यकत्वविचारः। ३.सूत्रप्रयोजन-विवेचनम् । ४.'लुक्युपसङ्ख्यम्' इति वार्त्तिकप्रत्याख्यानविमर्शः । ५.सूत्र प्राप्तदोषसमाधानविमर्शः । ६.वर्णाश्रये प्रत्ययलक्षणनिषेधविचारः । ७. प्रत्ययलक्षणसिद्धान्तविवेकः । "न लुमताङ्गस्य"[७७] इति सूत्रे - १. दोषोद्धार-विवेचनम् । "अलोऽन्त्यात्पूर्व उपधा"[७८] इत्यस्मिन्सूत्रे - १.अल्ग्रहणविवेचनम् । 'नानर्थकेऽलोऽन्त्यविधिरनभ्यास-विकारे' इति परिभाषाप्रत्याख्यानविवेचनम् । २.'अलः' इत्यत्र विभक्तिविमर्शः । "तस्मिन्निति निर्दिष्टे पूर्वस्य"[७९], "तस्मादित्युत्तरस्य"[८०] इत्युभयोः सूत्रयोः १.सूत्रप्रयोजनसिद्धान्तविमर्शः । २.निर्दिष्टग्रहणविवेचनम् । ३.उभयोः परिभाषासूत्रयोः नियामकत्वमपाकृत्य षष्ठीविभक्तिप्रकल्पकत्वविचारः । "स्वं रूपं शब्दस्याशब्दसंज्ञा"[८१] सूत्रेऽस्मिन् - १.अर्थवत्परिभाषाज्ञापनविमर्शः । २.सूत्रप्रयोजनविमर्शः । ३.सित्, पित्, जित् इत्यादिसंज्ञाविवेचनम् । ४.अस्य सूत्रस्य विशेषसूत्रकार्यार्थत्वविचारः । "अणुदित्सवर्णस्य चाप्रत्ययः"[८२] इति सत्रे - १.अप्रत्ययग्रहणविचारः । २. भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषाज्ञापनम् । ३.व्यक्तिजातिपक्शविवेचनम् । ४.सूत्रप्रत्याख्यानविमर्शः । "तपरस्तत्कालस्य"[८३] इत्यस्मिन् सूत्रे - १.तपरकरणप्रयोजनविचारः । २. ध्वनिस्फोटविवेचनम् । "आदिरन्त्येन सहे-ता"[८४] इत्यत्र - १.संज्ञासंज्ञिविचारसिद्धान्तः । "येन विधिस्तदन्तस्य"[८५] सूत्रेऽस्मिन् - १.तदन्तविधिविमर्शः । २. 'तदेकदेशभूतस्तद्ग्रहणेन गृह्यते' इति परिभाषाज्ञापनविमर्शः । ३.'व्यपदेशिवदभावोऽप्रातिपदिकेन' इति परि-भाषाज्ञापनसिद्धान्तः । ४. परिभाषाद्वयप्रयोजनसिद्धान्तविवर्शः । ५.'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषा-

प्रयोजनविचारविमर्शः । "वृद्धिर्यस्याचामादिस्तद्वृद्धम्"[८६] "त्य- दादीनि च"[८७], "एङ् प्राचां देशे"[८८] इत्येतेषां सूत्राणाम् - १.सूत्रार्थप्रतिपादनविमर्शश्चेत्यादिसिद्धान्ताः महाभाष्यकारेण नवाह्निके विमर्शिताः ।

एवम्प्रकारेण महाभाष्ये नवाह्निकेषु इतोऽपि नैके विषयाः सिद्धान्तिताः स्युः, तथापि अत्र सङ्क्षेपेण प्रथमाह्निके एकविंशतिः सिद्धान्ताः, द्वितीयाह्निके माहेश्वरसूत्रेषु एकविंशतिः सङ्ख्यकाः विषयाः, तृतीयाह्निके सूत्रद्वये द्वादश विषयाः, चतुर्थाह्निके सप्तसूत्रेषु त्रयोविंशतिः सिद्धान्ताः, पञ्चमाह्निके पञ्चदशसूत्राणां भाष्ये अष्टादश मुख्यांशाः, षष्ठाह्निके पञ्चदशसूत्राणां चतुर्विंशतिः विषयाः, सप्तमाह्निके एकादशसूत्राणां द्वाविंशतिः सिद्धान्ताः, अष्टमाह्निके चतुर्षु सूत्रेषु त्रयोविंशतिः विषयाः, नवमाह्निके च पञ्चदशसूत्राणां द्वात्रिंशद्विषयाः निर्दिष्टाः वर्तन्ते । अनेन शोधकर्तॄणां जिज्ञासूनां नवाह्निकमहाभाष्ये प्रतिपादितानां सिद्धान्तानाम् अन्वेषणे अवश्यं सौकर्यं स्यादिति, शम् ॥

**पादटिप्पण्यः**

1. महाभाष्यम्, आह्निकम् १ ।
2. पाणिनीयसूत्रष्टाध्यायी - ८/४/७४ ।
3. पाणिनीयसूत्रष्टाध्यायी - ५/१/७९ ।
4. माहेश्वरसूत्रम् - १ ।
5. माहेश्वरसूत्रम् - ८ ।
6. माहश्वरसूत्रम् - १ ।
7. माहेश्वरसूत्रम् - २ ।
8. माहेश्वरसूत्रम् - ३ ।
9. माहेश्वरसूत्रम् - ४ ।
10. माहेश्वरसूत्रम् - ५ ।
11. माहेश्वरसूत्रम् - ६ ।
12. माहेश्वरसूत्रम् - ७ ।
13. माहेश्वरसूत्रम् - ८ ।

14 - 88. पाणिनीयसूत्राष्टाध्यायी - १/१/१ तः 1/1/74 पर्यन्तम् ।

**सन्दर्भग्रन्थाः**


1. पाणिनीसूत्राष्टाध्यायी - महर्षिपाणिनिः डॉ. पुष्पादीक्षिता - संस्कृतभारती, २०१० ।
2. व्याकरणमहाभाष्यम् महर्षिपतञ्जलिः (भाष्यप्रदीपोद्द्योतसमुल्लसितम्) भार्गवशास्त्रीजोशी - चौखम्बासंस्कृतप्रतिष्ठान, दिल्ली, २००४
3. वैयाकरणसिद्धान्तकौमुदी - भट्टोजिदीक्षितः, (बालमनोरमातत्त्वबोधिनीभूषिता, भागः १-४) डॉ. शिवकुमारशर्मा, चौखम्बा विद्या भवन, वाराणसी, २००९ ।
4. परिभाषेन्दुशेखरः - नागेशभट्टः - श्रीविश्वनाथमिश्रः चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली, २००५ ।



**अतिथिप्राध्यापकः (व्याकरणविभागः)**
**मुम्बादेवी आदर्शसंस्कृत-महाविद्यालयः,**
**भारतीय-विद्या-भवनम्, के. एम. मुन्शीमार्ग,**
**मुम्बई-400007 ।**




# समानवचनकत्वविचारः

✍डॉ. विपिनकुमारः

**(निबन्धकर्त्रा समानवचनकविशेष्यविशेषणवाचकपदचतुष्टयम्, अपि चासमानवचनकविशेष्यविशेषण-वाचकपदचतुष्टयं पुरस्कृत्य तत्र व्युत्पत्तिकृद्गदाधरदिशा शास्त्रीयं विवेचनं विहितम् । नियमोल्लेखपूर्वकः तत्र तत्र समन्वयश्च प्रदर्शितः । नियमपदव्यावृत्तिश्च निरूपितेति पाठकानां भाषामर्मानुसन्धातॄणाञ्च कृते निबन्धोऽयं व्युत्पादक इति प्रतीमः ।)**

तत्रादौ ध्येयम्

- या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः ।
  प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे ॥
- असति विशेषानुशासने विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमः[1]।
- यल्लिङ्गं यद्वचनं या च विभक्तिः विशेष्यस्य ।
  तल्लिङ्गं तद्वचनं सैव विभक्तिः विशेषणस्यापि ॥

१. **समस्याकथनमुदाहरणप्रदर्शनञ्च** - एतेषु प्रयोगेषु समानवचनानि उपलभ्यन्ते । तद्यथा -

1. नीलो घटः, 2. पितरो देवताः, 3. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि, 4. शतं ब्राह्मणाः ।

एतेषु प्रयोगेषु च समानवचनानि नोपलभ्यन्ते-

1. वेदाः प्रमाणम्, 2. त्रयोः हेतुः, 3. जात्याकृतिव्यक्तयः पदार्थः, 4. पुरूरवो आद्रवसौ विश्वेदेवाः ।

अत्रेयं समस्या - क्वचित् शिष्टप्रयोगेषु विशेष्यविशेषणयोः समानवचनकत्वं क्वचिच्च - असमानवचनकत्वमिति कुतः ?

२. **समानवचनकत्वनियमस्वरूपम्, तद् विवेचनञ्च** - ''यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्य-विषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्र विशेष्य- विशेषणपदयोः समानवचनकत्वनियमः''।[2]

नियमे यत्र इति पदस्यार्थः भवति - विशेष्यविशेषणवाचकपदघटितवाक्यघटकम् इति । तेन नियम-स्वरूपमित्थं बोध्यम्विशेष्यविशेषणवाचकपदघटितवाक्यघटकविशेष्यवाचकपदोत्तरत्वेनानुसन्धीयमानविभक्तितात्पर्य-विषयसंख्या विरूद्धसंख्यायाः विशेषणवाचकपदाव्यवहित्तोतरत्वेनानुसन्धीयमानः विभक्तितात्पर्यविषयसंख्यया अवि-वक्षितत्वं तत्र विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमः । यथा नीलो घटः इत्यत्र । यदा तु विशेष्य-वाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्यायाः विशेषणवाचकपदाव्यवहित्तोतरत्वेनानुसन्धीयमानविभक्तिसंख्यया

विवक्षितत्वं तत्र विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियममाभावः इति फलति । यथा-वेदाः प्रमाणम् इत्यादौ ।

३. **किं तावद् समानवचनकत्वम्** - स्वसमानमविभक्तिकत्वं च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम् । साजात्यं च विभक्तिविभाजकप्रथमात्वादिना न तु समानानुपूर्वीकत्वं साजात्यम् वेदाः प्रमाणम्, शतं ब्राह्मणाः इत्यादावन्ययबोधानुपपत्तेः ।

४. **नियमस्योदाहरणेषु समन्वयः-**

**समानवचनकोदाहरणेषु नियमसमन्वयः** -

1. **नीलो घटः** - अत्र विशेष्यविशेषणवाचकपदघटितवाक्यं "नीलो घटः" इति वाक्यम् ।

   तद्घटकविशेष्यवाचकपदं घटपदम् । तदुत्तरविभक्तिः सु विभक्तिः । तत्तात्पर्यसंख्या एकत्वसंख्या । तद्विरुद्धसंख्या द्वित्वबहुत्वसंख्या । विशेषणवाचकपदं नीलपदम् । तदुत्तरवर्तिविभक्तिः सु विभक्तिः । तत्तात्पर्यविषयसंख्या एकत्वसंख्या । तया च विशेष्यवाचकपदोत्तरविभक्तितात्पर्य-विषयसंख्याविरुद्धसंख्यायाः अविवक्षितत्वम् अस्ति । अतः अत्र विशेष्यविशेषणवाचकपदयोः - नीलघटपदयोः समानवचनकत्वम् ।

2. **पितरो देवताः** - अत्र विशेष्यविशेषणवाचकपदघटितवाक्यं "पितरो देवताः" इति वाक्यम् । तद्घटकविशेष्यवाचकपदं पितृपदम् । तदुत्तरविभक्तिः जस् विभक्तिः । तत्तात्पर्यविषयसंख्या बहुत्व-संख्या । तद्विरूद्धसंख्या एकत्वसंख्या । विशेषणवाचकपदं देवतापदम् । तदुत्तरवर्तिविभक्तिः जस् विभक्तिः । तत्तात्पर्यविषयसंख्या बहुत्वसंख्या । तया च विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषय-संख्याविरुद्धसंख्यायाः अविवक्षितत्वम् । अतः अत्र विशेष्यविशेषणवाचकपदयोः पितृदेवतापदयोः समानवचनकत्वं सिद्धम् ।

3. **प्रत्यक्षानुमानोपमानशब्दाःप्रमाणा**[३]- अत्र विशेष्यविशेषणवाचकपदघटितवाक्यं "प्रत्यक्षानुमानोपमान-शब्दाः प्रमाणानि" इति वाक्यम् । तद्घटकविशेष्यवाचकपदं प्रत्याक्षनुमानोपमानशब्देतिपदम् । तदुत्तरविभक्तिः जस् विभक्तिः । तत्तात्पर्यविषयसंख्या बहुत्वसंख्या । तद्विरुद्धसंख्या एकत्वसंख्या । विशेषणवाचकपदं प्रमाणपदम् । तदुत्तरवर्तिविभक्तिः जस् विभक्तिः । तत्तात्पर्यविषयसंख्या बहुत्व-संख्या । तया च विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्यायाः अविवक्षितत्वं भवति। अतः अत्र विशेष्यविशेषणवाचकपदयोः प्रत्याक्षानुमानोपमानशब्दाः प्रमाणानि इति पदयोः समानवचन-कत्वनियमः ।

4. **शतं ब्राह्मणाः** - असति विशेषानुशासने विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमः इति तत्र प्रवर्तते, यत्र विशेषानुशासनं न भवति । शतं ब्राह्मणाः अत्र तु कोशस्य विशेषनियमानुरोधेन ''विंशत्याद्याः सदैकत्वे संख्यासंख्येयसंख्ययोः । संख्यायां द्वित्वबहुत्वे स्तः''[४] इति नियमात् असमानवचनकत्वं भवति । अत्र सति विशेषानुशासने विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमः न प्रवर्तते ।

**असमानवचनकोदाहरणेषु नियमसमन्वयः-**

1. **वेदाः प्रमाणम्** - अत्र विशेष्यविशेषणवाचकपदघटितवाक्यं ''वेदाः प्रमाणम्'' इति । तद्घटकविशेष्यवाचकपदं वेदपदम् । तदुत्तरवर्तिजस्विभक्तिः । तत्तात्पर्यविषयसंख्या बहुत्वसंख्या । तद्विरुद्धसंख्या एकत्वसंख्या । विशेषणवाचकपदं प्रमाणपदम् । तदुत्तरविभक्तिः सुविभक्तिः । तत्तात्पर्यविषयसंख्या एकत्व संख्या । तया च विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्यायाः विवक्षितत्वाम् तच्च प्रकृत्यर्थतावच्छेदके प्रमितिकरणत्वे अन्वेति इति ।
2. **त्रयो हेतुः**[५]- अत्र विशेष्यविशेषणवाचकपदघटितवाक्यं - त्रयो हेतुः इति । तद्घटकविशेष्यवाचकपदं ''त्रयः'' इति पदम् । तदुत्तरविभक्तिः जस् विभक्तिः । तत्तात्पर्यविषयसंख्या बहुत्वसंख्या । तद्विरुद्धसंख्या एकत्वसंख्या । तदुत्तरविभक्तिः सुविभक्तिः । तत्तात्पर्यविषयसंख्याविरुद्धसंख्यायाः विवक्षितत्वाद् समानवचनकत्वनियमः न प्रवर्तते । अतः असमानवचनकत्वोपपत्तिः । तत्र हेतुपदं कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नपरं, तादृशसमुदायत्वान्वितमेकत्वमेकवचनार्थः, अत एव शक्त्यादीनां त्रयाणां तृणारणिमणिन्यायेन हेतुत्वशङ्कानिरासः ।
3. **जात्याकृतिव्यक्तयः पदार्थः**[६]- अत्र विशेष्यविशेषणवाचकपदघटितवाक्यं ''जात्याकृतिव्यक्तयः पदार्थः'' इति । तद्घटकविशेष्यवाचकपदं जात्याकृतिव्यक्ति इति पदम् । तदुत्तरवर्तिजस्विभक्तिः । तत्तात्पर्यविषयसंख्या बहुत्वसंख्या । तद्विरुद्धसंख्या एकत्वसंख्या । विशेषणवाचकपदं पदार्थ इति पदम् । तदुत्तरविभक्तिः सुविभक्तिः । तत्तात्पर्यविषयसंख्या एकत्वसंख्या । तया विशेष्यविशेषणवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्यायाः विवक्षितत्वाद् न समानवचनकत्वम् । अत्र त्रितयनिष्ठस्यजात्याकृतिव्यक्तिनिष्ठस्य पदार्थत्वस्यैकत्वं विवक्षितमस्ति यतः पदवाच्यत्वं तर्कमते जात्याकृतिव्यक्तित्रितयपार्याप्तमस्तीति ।
4. **पुरूरवआद्रवसौ विश्वेदेवाः** - विशेष्यविशेषणवाचकपदघटितवाक्यं -''पुरूरवआद्रवसौ विश्वे- देवाः'' इति । तद्घटकविशेष्यवाचक पदं - ''विश्वेदेव'' इति । तदुत्तरवर्तिजस्विभक्तिः । तत्तात्पर्यविषयसंख्या बहुत्वसंख्या । तद्विरुद्धसंख्या द्वित्वसंख्या । विशेषणवाचकपदं ''पुरूरव आद्रवसौ'' इति । तदुत्तरविभक्तिः औविभक्तिः । तत्तात्पर्यविषयसंख्या द्वित्वसंख्या । ब्रह्मणा श्राद्धस्य रक्षार्थं विश्वेदेवाः सृष्टाः । तेषु सृष्टेषु

विश्वेदेवेषु पार्वणनाम श्राद्धरक्षायै पुरूरवोगणः, आद्रवोगणश्च नियोजितः । द्वित्वविशिष्टोऽयं गणः । एव श्राद्धरक्षार्थं समर्थः । न तु कश्चन अन्यतरः । द्वित्वविशिष्टस्यैव अस्य विश्वेदेवगणस्य रक्षकत्वमव-बोधयितुं अत्र विरुद्धसंख्या विवक्षितेति अवगन्तव्यम् ।

5. **नियमपदव्यावृत्तिः**

(क) नियमे वाचकपदं बोधकपरं, तेन कुमतिः पशुः इत्यादिलाक्षणिकस्थले कुमत्यादिपदे वाचकत्वाभावे-ऽपि न दोषः ।

(ख) पदोत्तरविभक्तिश्च अव्यवहितोत्तरत्वेन अनुसन्धीयमानविभक्तिरूपाग्राह्या । तेन दधि सुन्दरमित्यादौ विभक्तिलुकि अपि सति प्रयोजकत्वे समानवचनकत्वमुपपद्यते ।

(ग) विभक्तितात्पर्यविषय इत्युक्ते समूहालम्बनतात्पर्यस्थले अदोषः । यथा - वेदपदोत्तरजस्विभक्तिः, तात्पर्यसंख्या बहुत्वं भवतु, अपि च प्रमाणपदोत्तर सु विभक्तिः, तात्पर्यविषयः एकत्वं भवतु इति तात्पर्यद्वयात्मकं समूहालम्बनतात्पर्यम् । तद्विरुद्धा न एकत्वसंख्या । उपर्युक्ते निवेशे च विभक्ति-तात्पर्यविषयत्वेन विरुद्धसंख्यायाः विवक्षितत्वात् वेदाः प्रमाणमित्यादौ समानवचनकत्वोपपत्तिः ।

(घ) नियमे विभक्तिपदोपादानं किमर्थम्? इत्युक्ते 'सुन्दरं दधि बहवो गुणाः' इत्यादौ दधिपदोत्तर बहुत्वविवक्षया सुन्दरपदे समानवचनकत्वाभावो न । अत्र विभक्तितात्पर्यविषयः न बहुत्वम् । अपि बहुपदतात्पर्यविषय एव ।

(ङ) तात्पर्योपादानं किमर्थम् ? इति प्रश्ने यदा जसि सुत्वभ्रमः, अथवा एकत्वे स्वारसिकलक्षणा तदाऽपि वक्तुः तात्पर्यानुरोधेन वेदाः प्रमाणम् इत्यत्र समानवचनकत्वमेव ।

(च) विरुद्धान्तोपादानं किमर्थम्? अर्थात् विशेषणवाचकपदोत्तरविभक्त्या यत्र अविवक्षितत्वं तत्र समानवचनकत्वनियमः इत्युक्ते सति वेदत्वजातिगतैकत्वविवक्षायां वेदाः प्रमाणम् इत्यादिप्रयोगे विशेषणवाचकपदोत्तरविभक्त्या विवक्षितत्वेऽपि समानवचनकत्वनिष्पत्तये तदावश्यकं बोध्यम् ।

(छ) विशेषणवाचकपदोत्तरविभक्तिस्तु अव्यवहितोत्तरत्वेन अनुसन्धीयमाना विभक्तिः । अतः मृदु अन्नम् इत्यादौ विशेषणोत्तरविभक्त्यभावेऽपि न क्षतिः ।

अथेदानीं निबन्धोऽयं उपसंह्रियते - संस्कृतभाषां प्रयोक्तृषु अधिकांशेषु जनेषु अयं भ्रमः चिरात् प्रवृत्तः दृश्यते यत् विशेष्यं दृष्ट्वा तदनुसारविभक्तिः विशेषणे उपयोज्येति । मम निबन्धस्य उद्देश्यमस्यैव भ्रमस्य अपनोदनं वर्तते । वस्तुतः व्युत्पत्तिवादग्रन्थे गदाधरेण यः नियमः समानवचनकत्वोपपत्तये उदीरितः तदनुरोधेन एव अस्माभिः विशेषणेषु वचनव्यवस्था विधेया । संक्षेपतः इदं वक्तुं शक्यते यत् यत्र विशेष्यगतसंख्यया विशेषणगतसंख्यायाः वैवक्षिते विरुद्धत्वं भवति, तत्र असमानवचनकत्वं, यत्र च अविरुद्धत्वं तत्र समानवचनकत्वमिति दिक् ।

**सन्दर्भग्रन्थसूची-**


1. व्युत्पत्तिवादः, राष्ट्रियसंस्कृतसंस्थानम् ,नव दिल्ली, संस्करणम् प्रथमम्, 2011 ।
2. व्युत्पत्तिवादः, राष्ट्रियसंस्कृतसंस्थानम्, नव दिल्ली, संस्करणम् प्रथमम्, 2011 ।
3. न्यायसूत्रम्, डा.महेश झा, चौखम्बा संस्कृत सीरीज आफिस, वाराणसी ।
4. अमरकोषः, श्रीवेंकटेश्वर मुद्रणालय, मुम्बई, 1970 ।
5. काव्यप्रकाशः, व्याख्याकारः-आचार्य विश्वेश्वर सिद्धान्त शिरोमणि, ज्ञानमण्डल लिमिटेड, वाराणसी, वर्षम्, 2018 ।
6. न्यायसूत्रम्, डा.महेश झा, चौखम्बा संस्कृत सीरीज आफिस, वाराणसी ।


**अन्यसहायकग्रन्थाः-**


1. व्युत्पत्तिवादः, गदाधरभट्टाचार्यः ।
2. व्युत्पत्तिवादः - मुक्तस्वाध्यापीठम्, राष्ट्रियसंस्कृतसंस्थानम्, नव दिल्ली ।



**डी. ए. वी. एच्. जेड. एल्.**

**उच्च माध्यमिक विद्यालय, जावर माइन्स, उदयपुर**

**- ३१३९० (राजस्थान) ।**




# व्याकरणस्य प्रयोगभूरस्ति साहित्यम्

✍श्री.पङ्कजः

**(उत्साहिना युवविदुषाऽत्र लेखे शब्दस्य व्याकरणत्वम्, अर्थस्य च साहित्यत्वमिति मन्वानेन 'वागर्थप्रतिपत्तये' इति रघुवंशवाक्यांशस्य 'व्याकरणसाहित्यप्रतिपत्तये' इत्यर्थापयितुं चेष्ट्यते । 'अदोषौ शब्दार्थौ काव्यमि'त्यत्र च काव्यदोषस्थाने शब्दाशुद्धिरूपं दोषं स्वीकृत्य, 'रमणीयार्थप्रतिपादकः शब्दः काव्यमि'ति व्याख्यानक्रमे रमणीयशब्दस्यार्थं निष्पत्तिं विचिन्त्य, शब्दस्यार्थबोधस्तु साहित्यशास्त्रेण जायते इति उद्घोष्य, पुनः साहित्यशास्त्रीयसमासप्रयोगप्रदर्शनपूर्वकं 'व्याकरणज्ञानं विना कस्यापि ग्रन्थस्य अर्थबोधो न शक्यते' इति च प्रतिपाद्य 'साहित्यव्याकरणयोः दृढतरः सम्बन्धः' इति निरूपयितुकामेन जगतः पितरौ इव साहित्यव्याकरणयोः परस्परसम्पृक्तत्वं प्रमाणयितुं स्वलेखनी व्यापारिता । वस्तुतस्तु व्याकरणे, साहित्ये चोभयत्र शब्दः अर्थश्च प्रमेयतां भजते । साहित्यपदेन न केवलं कालिदासादीनामेव कृतिः ग्राह्या, अपि तु विधातुः सकला सृष्टिरेव साहित्यम् । तत्र तत्र च प्रयोगभूमित्वम् । अत एव शेषावतारेण पतञ्जलिना निगदितम् 'महाञ्छब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती, त्रयो लोकाः' इत्यादि ।)**

भाषा मानवस्य व्यवहारे मुख्यं घटकं भवतीति वयं समेऽपि अवगच्छाम एव, भाषया विना लाकव्यवहारः अस्पष्टः भवति इत्यपि अस्माकं मानसपटले स्थितमेवास्ति । भाषायाः परिष्कारः व्याकरणेन एव सम्भवति । तदर्थं पाणिनिना बहूनि सूत्राणि निर्मितानि, रूपनिष्पत्तिश्च दर्शिता । अत्र ध्यातव्यं यत् येषां रूपाणां निष्पत्तिः व्याकरण-शास्त्रेण क्रियते तेषां प्रयोगस्तु साहित्यशास्त्रे एव शक्यः, अतः व्याकरणसाहित्ययोः विद्यते कश्चन विशेषसम्बन्धः। कुत्र कुत्र साहित्यव्याकरणयोः अन्योऽन्याश्रयेण लोकोपकारः जायते इत्यस्मिन् विषयेऽत्र विचारः करिष्यते । व्याकरणशास्त्रस्य अपरं नाम शब्दशास्त्रमपि विद्यते, अस्य पुष्टिं स्वयं पतञ्जलिः महाभाष्ये करोति - अथ शब्दानुशासनम् (म.भा.1.1) इति अनेन स्पष्टमस्ति यत् शब्दशास्त्रं व्याकरणमेव विद्यते । पुनश्च तस्य शब्दस्य अर्थबोधस्तु साहित्यशास्त्रेण जायते, कथमिति पश्यामः - वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये । (रघु. 1.1) अस्मिन् श्लोके महाकविना कालिदासेन शब्दार्थयोः यः सम्बन्धः स्वीकृतः सः शाश्वतः वर्त्तते । तेन स्पष्टं कृतं वागर्थप्रतिपत्तये मया महाकाव्यमिदं निर्मीयते । अनेन द्वितीयं तत्त्वम् इदमपि स्पष्टं भवति यत् शब्दस्तु व्याकरण-शास्त्रं तस्य अर्थप्रतीतिः साहित्येन जायते । अतः अत्र अर्थशब्दः साहित्यशास्त्रस्य प्रतिपादकोऽस्ति ।

एवमेव ये काव्यशास्त्रिणः काव्यलक्षणानि अरचयन् तैरपि शब्दार्थयोः महत्त्वं स्वीकृतमस्ति । उदाहरण-स्वरूपं यथा - तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि (का.प्र.प्र. उल्लासः) इति मम्मटाचार्यस्य काव्य-लक्षणेऽस्मिन् व्याकरणस्य महत्त्वं स्फुटतया दृष्टिपथे आयाति । कथमिति विचारयामः- अत्र अंशद्वयेन व्याकरणस्य महत्त्वम् अवगम्यते-

1. शब्दार्थौ काव्यम् ।

2. अदोषौ शब्दार्थौ काव्यम् – अर्थात् दोषरहितौ शब्दार्थौ एव काव्यं भवितुम् अर्हतः ।

शब्दार्थयोः निर्दोषता तु व्याकरणेनैव शक्या, अतः व्याकरणं विना काव्यमपि कर्तुं न शक्यते, इत्यपि अनेन काव्यलक्षणेन स्पष्टतया अवगम्यते । एवमेव मम्मटाचार्येण काव्यशक्तिप्रतिपादनकाले वृत्तिभागे कथितं यत् – छन्दोव्याकरणाभिधानकोशकलाचतुर्वर्गगजतुरगखड्गादिलक्षणग्रन्थानां काव्यानां च महाकविसम्बन्धिनाम्, आदिग्रह-णादितिहासादीनां च विमर्शनाद् व्युत्पत्तिः (का.प्र.प्र.उ.) इति अत्रापि मम्मटाचार्येण स्पष्टतया प्रतिपादितं यत् व्युत्पन्नेन कविना भाव्यम् चेत् व्याकरणादिशास्त्राणाम् अध्ययनं नितान्तम् अपेक्षते । अतः स्पष्टमस्ति व्याकरणं विना साहित्यशास्त्रेऽपि प्रवेशः न शक्यः ।

एवमेव साहित्यशास्त्रे च्युतसंस्कृतिनामकः दोषः स्वीक्रियते, यस्य प्रतिपादनं काव्यप्रकाशे इत्थं कृत-मस्तिच्युतसंस्कृतिः – व्याकरणलक्षणहीनं यथा – एतन्मन्दविपक्वतिन्दुकफलस्यामोदरापाण्डरप्रान्तं हन्त पुलिन्द-सुन्दरकरस्पर्शक्षमं लक्ष्यते । तत्पल्लीपतिपुत्रि !, कुञ्जरकुलं कुम्भाभयाभ्यर्थना दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः । (का.प्र.स.उ.) अत्रानुनाथते इति सर्पिषो नाथते इत्यादाविवाशिष्येव नाथतेरात्मनेपदं विहितं (आशिषि नाथः इति) अत्र तु याचनमर्थः । अनेन प्रतिपादनेन मम्मटाचार्येण स्पष्टं कृतं यत् व्याकरणनियमानुसारमेव काव्यनिर्माणं करणीयम् अन्यथा स्पष्टार्थप्रतीतिर्न जायते । तस्मात् तथ्यमिदं सिद्धं यत् व्याकरणस्य साहित्येन दृढतरः सम्बन्धोऽस्ति ।

एवमेव पण्डितजगन्नाथोऽपि व्याकरणस्य महत्त्वं स्वकाव्यलक्षणे प्रतिपादितवान् – रमणीयार्थप्रतिपादकः शब्दः काव्यम् (रस.प्र.आ.) इति यः शब्दः रमणीयार्थं प्रतिपादयति सः काव्यं भवति । अस्य रमणीयशब्दस्य निष्पत्तिस्तु व्याकरणेनैव शक्यते । वक्रोक्तिसम्प्रदायस्य प्रवर्तकः आचार्यः कुन्तकोऽपि शब्देन सह अर्थस्य सम्बन्धेन काव्यरूपं दर्शयति । तद्यथा – शब्दार्थौ सहितौ वक्रकविव्यापारशालिनी । बन्धे व्यवस्थितौ काव्यं तद्विदाह्लाद-कारिणो ।। व.जी. 1.7) । अनेन प्रतिपादनेन कुन्तकेन स्पष्टं कृतं यत् – शब्दः अर्थश्च मिलित्वा काव्यं भवति । शब्दः तु व्याकरणमेव भवति । अत्र कश्चिद् आशङ्कां कर्तुं शक्नोति ग्रन्थे कविना एतादृशः अर्थस्तु न प्रतिपादितः तर्हि कथं पंकजेनेदं स्वीकृतम् ? अत्रोच्यते यदि शब्दानुशासनं व्याकरणमस्ति तर्हि लोके यावन्तः अपि शब्दाः सन्ति ते व्याकरणेनैव निष्पन्नाः भवन्ति । अतोऽत्र शब्दस्य कृते व्याकरणस्य प्रयोगः युक्तमस्ति ।

एवमेव आनन्दवर्धनोऽपि शब्दसामर्थ्यं ध्वन्यालोके स्वीकरोति – सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन । यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ।। ध्व.1.8।। अत्र प्रतीयमानार्थस्य महत्त्वं प्रतिपादितमस्ति, तमर्थं कश्चिद् योगी शब्दः प्रतिपादयति । तस्य शब्दस्य निष्पत्तिस्तु व्याकरणेनैव जायते किन्तु अर्थबोधस्तु ध्वनि-शक्तिद्वारा एव शक्यते । कथमिति चेत् – शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते । वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम् ।। ध्व.लो.1.7।। अनेन स्पष्टमस्ति यत् तस्य योगिशब्दस्य अर्थबोधः साहित्यिकमनीषया एव शक्यते ।

तदर्थं व्याकरणेन सहैव साहित्यिकतत्त्वानां ज्ञानमपि नितान्तम् अपेक्षते । एतस्मात् साहित्यव्याकरणयोः दृढतरः सम्बन्धः दृष्टिपथम् आयाति । ध्वनिः/स्फोटः वा व्याकरणशास्त्रस्य प्रमुखः प्रतिपाद्योऽस्ति । तथैव साहित्यशास्त्रेऽपि ध्वनेः विशिष्टं स्थानमस्ति । स्फोटे ध्वनौ वा केवलं नामभेदो वर्त्तते, विषयस्तु समान एव । अर्थात् व्याकरणशास्त्रे यः स्फोटः विद्यते साहित्ये सः ध्वनिरूपेण प्रसिद्धोऽस्ति । अस्य पुष्टिः मम्मटाचार्येणापि स्वग्रन्थे कृतास्ति - इदमिति काव्यम्, बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः ।। का.प्र. 1.4 वृत्तिभागः) अनेन प्रतिपादनेनापि साहित्यव्याकरणयोः दृढतरः सम्बन्धः दृष्टिगोचरं भवति ।

काव्यशास्त्रे अन्येऽपि बहवः आचार्याः अभूवन् यैः शब्दस्य महत्त्वं स्वीकृतम् । तेषु केचन यथा-

1. शब्दार्थौ सहितौ काव्यम् (काव्यालङ्कारम्) अयं सिद्धान्तः भामहेन स्वग्रन्थे प्रदत्तः वर्त्तते । अत्रापि शब्दार्थयोः द्वयोरपि महत्त्वं दृष्टिगोचरं भवति ।
2. ननु शब्दार्थौ काव्यम् (रुद्रटः) रुद्रटेनापि भामहस्य मतमेव पुष्टीकृतमिति काव्यलक्षणस्य अवलोकनेन ज्ञायते । किञ्च ननुशब्दस्य प्रयोगः भिन्नतां प्रकटयति । ननुशब्दः निश्चयार्थं प्रकटयति । तस्मात् निश्चयेन शब्दार्थौ एव काव्यं भवतः ।
3. शब्दार्थौ ते शरीरम् (राजशेखरः) राजशेखरेणापि शब्दार्थौ काव्यस्य शरीरं स्वीकृतम् । अर्थात् व्याकरणमेव काव्यस्य शरीरमस्ति । लोकव्यवहारमपि पश्यामश्चेत् शरीरं विना किमपि कार्यं सुफलं न भवति । नीतिश्लोकेऽपि आगतम् - शरीरमाद्यं खलु धर्मसाधनम् । इत्यनेन शरीरदृढीकरणाय व्याकरण-शास्त्रस्य ज्ञानमपि नितान्तमपक्षते सहृदयेभ्यः ।
4. गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ (प्रथमः वाग्भट्टः) वाग्भट्टस्य अनेन सिद्धान्तेनापि शब्दार्थयोः महत्त्वं ज्ञायते । किञ्च दोषवर्जितौ इत्यनेन शब्देन व्याकरणस्य प्रधानतापि मुखरी - भवति । कथमिति चेत् - व्याकरणं विना कस्यापि शब्दस्य दोषपरिमार्जनं न शक्यते । तस्मात् दोषवर्जितौ शब्दार्थौ व्याकरणेनैव सम्भवतः ।
5. शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालङ्कारौ काव्यम् ।। (द्वि.वाग्भट्टः) अत्रापि निर्दोषौ शब्दार्थौ इत्येव प्रमुखं स्थानं भजते । अतः तथ्यमिदं स्पष्टं भवति काव्यनिर्माणाय सर्वादौ दोषरहितस्य शब्दस्य आवश्यकता भवति । इयम् आवश्यकता व्याकरणद्वारा एव पूर्णा भवति । अतः साहित्यव्याकरणयोः दृढतरः सम्बन्धः विद्यत एव ।

**साहित्यशास्त्रे समासप्रयोगः** - संस्कृतसाहित्ये पदे पदे समासः दृश्यते । अस्मिन् शास्त्रे सर्वेऽपि महाकवयः स्वकाव्येषु ग्रन्थेषु वा समासस्य प्रचुरं प्रयोगं कृतवन्तः । उदाहरणस्वरूपं यथा -

**विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः ।** (शि.व. 1.7)

इत्यत्र विहङ्गराजस्य अङ्गरुहैः इव आयतैः (उपमित.स.) हिमरण्मय्याम् उर्व्यां रोहन्तीति हिरण्य-मोर्वीरुहाः ताश्च ताः वल्लयश्चेति तासां तन्तवश्चेति तैः (त.पु.स.), अनेन स्पष्टं भवति यत् संस्कृतसाहित्ये समेऽपि महाकवयः समासस्य सन्धेश्च विपुलं प्रयोगं कृतवन्तः । पद्यापेक्षया गद्यकाव्ये अधिकः समासः दृश्यते । उदाहरणस्वरूपं यथा - अनवरताभ्यस्तलङ्घनघनोपचयकठिनमांसमेदुरादूरुद्वयान्निष्पततेवानुल्वणजानुग्रन्थिप्रसूतेन तनु-तरजङ्घाकाण्डयुगलेन भासमानम् (हर्ष.च.उ.) इत्येतादृशः समासप्रयोगः हर्षचरितस्य चतुर्थे उच्छ्वासे दृश्यते । कादम्बरीग्रन्थे एतस्मादपि अधिकः समासप्रयोगः विद्यते । अत्र एतत् स्पष्टं भवति यत् - व्याकरणज्ञानं विना कस्यापि ग्रन्थस्य अर्थबोधः न शक्यते । यदि कश्चिदपि संस्कृतसाहित्यं पठितुमिच्छति तर्हि सर्वादौ सन्धिं समासं च सः नूनमेव अवगच्छेत् । अस्मिन् सन्दर्भे केनचित् कथितमपि - यद्यपि बहुनाधीषे तथापि पुत्र पठ व्याकरणम् इत्यनेन प्रतिपादनेनापि साहित्यव्याकरणयोः दृढतरः सम्बन्धः उपस्थितः भवति । संस्कृतसाहित्ये कानिचित् महाकाव्यानि एतादृशान्यपि सन्ति यानि पूर्णतया व्याकरणस्य पोषणं कुर्वन्ति । तत्र भट्टीकाव्यम् अर्जुनरावणीयञ्च प्रमुखं स्थानं भजते । भट्टीकाव्ये पाणिनीयसूत्राणां व्याख्या महाकाव्यस्य श्लोकेषु कृतास्ति । एवमेव अर्जुनरावणीये तु अष्टाध्याय्याः सूत्रक्रमेणैव श्लोकाः निर्मिताः वर्त्तन्ते । अनेन स्पष्टं भवति यत् साहित्यिकाः अपि व्याकरणशास्त्रस्य ज्ञातारः आसन् । एवमेव पाणिनिः कात्यायनश्चापि महाकाव्यम् अलिखताम् । अनेन तथ्यमिदं स्पष्टं भवति यत् व्याकरणस्य प्रमुखाः आचार्याः अपि साहित्यिकतत्त्वस्य ज्ञातारः आसन् । एतस्मादपि साहित्यव्याकरणयोः दृढतरः सम्बन्धः अवलोक्यते । अथ च भर्तृहरिः तादृशः कविः वर्त्तते यः उभयत्र बहुप्रसिद्धः। साहित्ये अस्य शतकत्रयम्, व्याकरणे च वाक्यपदीयम् इत्येतादृशाः ग्रन्थाः छात्राणां जिह्वाग्रभागे तिष्ठन्ति । अनेनापि साहित्यव्याकरणयोः सम्बन्धः अवगम्यते । एवम् उभयोः मेलनेन लोकोपकारोऽपि सर्वदा जायते । महाभाष्यकारेण पतञ्जलिना कथितं यत् - एकः शब्दः सम्यग् ज्ञातः स्वर्गे लोके च कामधुग् भवति । अनेन शब्दस्य महत्त्वं प्रतिपादितमस्ति व्याकरणशास्त्रे । साहित्येऽपि कश्चित् व्यञ्जकः शब्दः एव लोकोत्तरचमत्कारं जनयति । अस्य प्रमाणं काव्यप्रकाशे ध्वन्यालोके च प्राप्यते । तद्यथा - उक्त्यन्तरेणाशक्यं यत्, तच्चारुत्वं प्रकाशयन् । शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयी भवेत् ।। (ध्वन्यालोकः 1.15) इत्यनेन स्पष्टमस्ति यत् व्यञ्जकेन शब्देनैव काव्ये चमत्कारः आयाति । मम्मटाचार्योऽपि ध्वनिकाव्यस्य उदाहरणे व्यञ्जकशब्दस्य महत्त्वं प्रतिपादयति - अत्र तदन्तिकमेव रन्तुं गतासीति प्राधान्येनाधमपदेन व्यज्यते । इत्यत्र एकेन शब्देन चमत्कारः जायते। अतः अत्रापि शब्दस्य महत्त्वं दृष्टिगोचरं भवति । कदाचित् व्याकरणस्य विविधाङ्गैरपि ध्वनिः उत्पद्यते, तस्य प्रमाणं यथा - सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः । कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ।। (ध्वन्यालोकः 3.16) अस्य भावोऽस्ति यत् उपर्युक्तैः सर्वैरपि तत्त्वैः ध्वनिः जायते । आनन्दवर्धनाचार्यस्य अनेन प्रतिपादनेनापि साहित्यव्याकरणयोः दृढतरः सम्बन्धः अस्माकं पुरतः उपस्थितः भवति ।

**निष्कर्षः** - अन्ततो गत्वा एवं वक्तुं शक्यते यत् साहित्यव्याकरणयोः सम्बन्धः शाश्वतः विद्यते । कथमिति चेत् व्याकरणं काव्यस्य शरीरं भवति । शरीरं विना किमपि कार्यं सिद्धं न भवति । एतस्मात् व्याकरणज्ञानं विना काव्यनिर्माणमपि कर्तुं न शक्यते । अत्र महाकविकालिदास एव प्रमाणभूतोऽस्ति येन कथितं यत् - वागर्थप्रतिपत्तये काव्यनिर्माणं करोमीति । अस्य भावः विद्यते साहित्यव्याकरणै जगतः पितरौ इव परस्परं संपृक्त स्तः । अतः द्वयोः विभाजनं न शक्यते इत्यपि युक्तयुक्तेन प्रतिपादनेन स्पष्टं कृतमिति ।

**सन्दर्भग्रन्थाः-**


1. काव्यप्रकाशः ।
2. ध्वन्यालोकः ।
3. महाभाष्यम् ।
4. लघुसिद्धान्तकौमुदी ।
5. महाभाष्यम्
6. वक्रोक्तिजीवितम् ।
7. काव्यालङ्कारः ।
8. शिशुपालवधम् ।
9. रघुवंशम् ।
10. रसगंगाधरः ।
11. हर्षचरितम् ।
12. कादम्बरी ।
13. वासवदत्ता ।



**सहायकाचार्यः, साहित्यविभागः,**

**केन्द्रीयसंस्कृतविश्वविद्यालयः,**

**श्रीरणवीरपरिसरः, जम्मूः ।**




## मुखपृष्ठस्थपद्ये स्फोटविशेषणानां निर्वचनम्

सुद्ध्युपास्यः – सुधीभिः बुद्धिमद्भिः उपास्यः,बुद्धिमत्कर्तृकोपासनायोग्यः स्फोटः ।

मद्ध्वरिः – सः कः इत्याकाङ्क्षायां मद्ध्वरिः । मधुः असुरविशेषः, तस्यारिः विष्णुरित्यर्थः ।

धात्रंशः – कीदृशोऽयं मद्ध्वरिरित्याकाङ्क्षया धात्रंशः । धाता = ब्रह्मा अंशो यस्य मद्ध्वरेः सः ।

लाकृतिः – यथा लृकारः क्लृपिस्थ एवैकस्तथा विष्णुरप्येक एवेति बोधयितुं लाकृतिः । लृन आकृतिरिवाकृतिर्यस्य सः इत्यर्थः ॥





## व्याकरणविभागः

केन्द्रीयसंस्कृतविश्वविद्यालयः

(प्राक्तनं राष्ट्रियसंस्कृसंस्थानम्)

(संसदोऽधिनियमेन संस्थापितः, शिक्षामन्त्रालयभारतसर्वकाराधीनः)

क. जे. सोमैयापरिसरः

विद्याविहारः, मुम्बई – 400 077 (महाराष्ट्रम्)

वेबसाईट csu-mumbai.edu.in

ई-मेल rsksmumbai@yahoo.com